श्रीः ।

# श्रीमद्धनूमता विरचितं

# हनुमन्नाटकम् ।

श्रीमन्मिश्रदामोदरेण संकलितं

मिश्रमोहनविरचितया दीपिकया टीकया समेतं च ।

तदेतत्

' साधले ' इत्युपपदधारिशम्भुजनुर्गजाननशर्म-

द्वारा संशोधय्य

श्रीभगीरथात्मजेन हरिप्रसादेन

मुम्बय्यां

' गुजराती ' मुद्रणालयेऽङ्कयित्वा प्राकाश्यमनायि ।

तृतीयेयमङ्कनावृत्तिः ।

शकाब्दाः १८३३, संवत् १९६८.

# प्रस्तावना ।

चतुर्दशभिरेवाङ्कैर्भुवनानि चतुर्दश ।
श्रीमहानाटकं धत्ते केवलं ब्रह्म निर्मलम् ॥ १ ॥

श्रीमद्धनुमन्नाटकस्य तावन्नियमेन प्रणेत्रादिराद्धान्त उत्पादनसमकालश्च सम्यक्तया निर्णेतुं न शक्यते । एतदवधि यैः कैश्चिदतिप्रयासतः प्रसिद्धानामवर्णनीयानां महाकाव्यादीनां तत्प्रणेतॄणां कुशाग्रमनीषिणां महानुभावानां कविवराणां कालज्ञानाय प्रयतितं, क्वचिन्निष्कासितं च शकादि कुत्रचिदनुमितं च तैरुभयतोऽपि नास्य नाटकस्य कालादि स्थूलमानेनापि क्वचिदुल्लेखितम् । अत एतदवधि नास्य केषामपि यथावदुपगम इत्यनुमीयते । एतस्य चरमाङ्के तु—

रचितमनिलपुत्रेणाथ वाल्मीकिनाऽब्धौ
निहितममृतबुद्ध्या प्राङ्महानाटकं यत् ॥
सुमतिनृपतिभोजेनोद्धृतं तत्क्रमेण
ग्रथितमवतु विश्वं मिश्रदामोदरेण ॥ १ ॥

इति प्रणेत्राद्यभिधानसंवलितं पद्यं दृश्यते । तत्रेयं लौकिकी कथा—पूर्वमेतद्धनूमता स्वीयैर्नखरटङ्कैर्गिरिशिलासु यथाक्रमं विलिखितम् । तत्तु श्रीरामैकपरायणेन श्रीमद्वाल्मीकिना तदेतस्यातिमाधुर्यमाकलय्याग्रिमकाले लोकेषु रामायणप्रचाराभावशङ्कया संरक्षणायार्णव इदं निधेहीति हनूमान्प्रार्थितः । सोऽपि तथेति सादरमब्धौ प्रास्यत् । अनन्तरं च तदवतारेण सुमतिना भोजनृपतिना जलमज्जनप्रवीणैः समुद्रादुद्धृतमित्युपरिस्थेऽस्मिन्नेव पद्ये मिश्रदामोदरेणोद्धृतामिति च सिध्यति तत्रैव । कालश्रुतावपि—

रम्यं श्रीरामचन्द्रप्रबलभुजबृहत्ताण्डवं काण्डशौण्ड-
व्याप्तं ब्रह्माण्डभाण्डे रणशिरसि महानाटकं पाटवाब्धिम् ।
पुण्यं भक्त्याञ्जनेयप्रविरचित मिदं यः शृणोति प्रसङ्गा-
न्मुक्तोऽसौ सर्वपापादरिभटविजयी रामवत्सङ्गरेषु ॥

इति चास्य हनूमद्विहितत्वमेव दृढीभवति । अतोऽस्यानादित्वात्कालज्ञानं दूरापास्तमेव । केवलमस्याब्ध्युद्धरणसमयो भोजकालीन एवेति यद्यपि सिद्ध्यति । सोऽप्यतीव प्राचीन इति कृत्वा मास्तु चैतादृग्दुर्ज्ञेयस्थूलतुषकण्डनप्रयासेन ।

एतस्मिन्नाटकेऽपि सर्वेषां रसानामाविर्भावः, पदलालित्यं, भावसदृशवृत्तन्यासः, अर्थगाम्भीर्यं ओतप्रोतं माधुर्यं च कवेर्धीरोदात्तादिगुणाञ्ज्ञापयति । तथापि नाटकसरणिविलक्षणमेवैतदितिकृत्वाऽस्य पौरातन्यं सिध्यति ।

तदेतत्संप्रति मद्धितैषिकृतसूचनेन सर्वोपयोगार्हं स्यादिति स्वान्ते निधाय व्युत्पित्सूनामस्य सुखावगाहनाय तथेदानींतनसरणिमनुलक्ष्य पदच्छेदपरसवर्णादि यथायथं विद्वद्द्वारा कारयित्वा सम्यक्संशोधय्य च मया पूर्वं मुद्रितमासीत् । तच्च संप्रति ग्राहकैर्निःशेषं कृतमित्यधुना तृतीयावृत्तिमुद्रणे प्रयत्नः कृतः । तद्विज्ञाप्यते च संप्रति मुद्रणसमयेऽस्मिन्स्खलितानि गुणज्ञैः सारग्राहिभिः क्षान्त्वाऽऽदरणीयोऽयं ग्रन्थ इत्याश्रयदातृषु ।

## ॥ पुस्तकप्राप्तिस्थलानि ॥

इदं पुस्तकं इतराणि च संस्कृतादिपुस्तकानि मुंबय्याख्यराजधान्यां श्रीकालिकादेव्या मार्गे रामवाडीनामकस्थलसमीपे भगीरथात्मजस्य हरिप्रसादशर्मणः पुस्तकालये, तथा कानपुरसंज्ञकनगरे हनूमान्दास–हरिप्रसादयोः पुस्तकालये, उत च काश्यां बाबु कोलेश्वरसिंहस्य च पुस्तकालये याथातथ्यमौल्येन ग्राहकेभ्यो मिलिष्यन्ति ।

भगीरथात्मजो हरिप्रसादशर्मा.

श्रीः ।

श्रीमन्मिश्रदामोदरेण संकलितं

# हनुमन्नाटकम् ।

दीपिकाख्यया व्याख्यया समेतम् ।



## प्रथमोऽङ्कः ।

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य । विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥ १ ॥

हृदये यत्प्रेरणया समुद्यतोऽहं विमूढतरबुद्धिः ।
तत्पदकमलं वन्दे गोकुलनाथस्य वेदादेः ॥ १ ॥
हनुमन्नाटकसागरशब्दार्थागाधतां सुबोधत्वम् ।
नेतुं कृतसाहसतां मम सुधियः क्षन्तुमर्हन्तु ॥ २ ॥

तावच्छ्रीरामचन्द्रगुणचक्रवालवर्णनेच्छुः कविः स्वाभीष्टदेवतानामान्तरिताशीःपूर्वां नान्दीमवतारयति—कल्याणानामित्यादिद्वादशपदैः। तदुक्तं नाटकावतारे—'अष्टाभिर्दशभिर्वापि नान्दी द्वादशभिः पदैः । आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इति। नान्दी मङ्गलवचनमिति अत्र संक्षेपतोऽर्थोद्घाटनं क्रियते विस्तरस्य श्रद्धाविच्छेदकत्वात् । रामनाम भवतां भूतये प्रभवतु इत्यन्वयः । भूतये ऐहिकपारलौकिकैश्वर्याय मोक्षाय वा 'भूतिरैश्वर्यमोक्षयोः' इति चरकः। मेलकोपमालंकारः । उक्तं च वीरभानौ 'विशेषणार्थनिर्भर्ता यद्यनेकार्थभाक्पदः । वाक्यवादिविहीनोऽपि मेलकः संमतो बुधैः' इति ।

पातु श्रीस्तनपत्रभङ्गमकरीमुद्राङ्कितोरस्थलो
देवः सर्वजगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयः ।
क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भूर्भाति
स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः ॥ २ ॥

तत्र विशेषणैस्तद्रूपप्रदत्वं द्योतयति । कल्याणानां निधानं निधीयन्ते यस्मिंस्तदिति विग्रहः । कलिमलमथनम् । एतेन पापहारित्वमुक्तम् । कविवरवचसां वाल्मीक्यादिवाचाम् । एकं विश्रामस्थानम् । एतेन तदितरस्यासद्वर्णनत्वमुक्तम् । एतेन पदत्रयेणैहिकैश्वर्यप्रदत्वमुक्तम् । पारलौकिकैश्वर्यप्रदत्वमाह–पावनानां ब्रह्मादीनामपि पावनम् । एतेन तत्तल्लोकप्रदत्वमुक्तम् । अतः पारलौकिकैश्वर्यप्रदत्वमायाति । अथ मोक्षप्रदत्वमाह–परपदप्राप्तये परस्मिन्ब्रह्मणि पदं स्थानं तत्प्राप्तये प्रस्थितस्य मुमुक्षोः पाथेयं मार्गे साधु । ननु नाम्नैव मोक्षः कथं धर्मादीनां सत्त्वशोधकत्वेन मोक्षदत्वमिति चेत्तत्राह । धर्मद्रुमस्य बीजम् । नाम्नि कीर्तिते सर्वे धर्माः कृता भवन्ति । अथोत्पत्तिबीजे पुष्पफलादिकं सर्वमस्तीति । ‘ जीवनानां ’ इति वा पाठः । जीवनं प्रकृतिस्तस्यापि जीवनं चेतनकर्तृ । उक्तं च–‘ यतो जीवत्वमायाति जीवः प्रकृतितः स्वतः ’ इति । एतैर्विशेषणैर्मोक्षप्रदत्वमुक्तम् ॥ १ ॥

इदानीं वर्णनीयनायकगुणानाह–पात्विति । स देवो विलसनशीलः श्रीरामो वः पातु । कीदृक् । श्रियः स्तनयोर्यः पत्रभङ्गः पत्ररचना तत्र या मकरीमुद्रा तयाऽङ्कितोरस्थलः । एतेन शृङ्गारित्वं सूचितम् । सर्वजगत्पतिः । एतेन रञ्जितलोकत्वमुक्तम् । पुनः कीदृक् । मधुवधूवक्त्राण्येवाब्जानि कमलानि तत्संकोचनाय चन्द्रोदयः । स कः । यस्य नवेन्दुविशदे द्वितीयचन्द्राकारे दंष्ट्राङ्कुरे भूर्भाति स्म । क्रीडायै धृता वराहतनुर्येन । किंभूता भूः । प्रलयाब्धिरेव पल्वलमल्पसरस्तस्य तलं तत उत्खातो य एकमुस्तस्तत्सदृशस्तदाकारा । एतेन पदद्वयेनातिकल्पत्वमुक्तम् । उक्तं च रसोदधौ–‘ दाता सद्गुणशीलः सुवयोरूपान्वितः परप्रेमी । विद्यावानतिकल्पो रञ्जितलोको मतोऽनेन’ इति ॥ २ ॥

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः । अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥ ३ ॥ तं रामं रावणारिं दशरथतनयं लक्ष्मणाग्र्यं गुणाढ्यं पूज्यं प्राज्यं प्रतापावलयितजलधिं सर्वसौभाग्यसिद्धिम् । विद्यानन्दैककन्दं कलिमलपटलध्वंसिनं सौम्यदेवं सर्वात्मानं नमामि त्रिभुवनशरणं प्रत्यहं निष्कलङ्कम् ॥ ४ ॥

## अथोपक्रमः ।

आसीदुद्भटभूपतिप्रतिभटप्रोन्माथिविक्रान्तिको भूपः पङ्क्तिरथो विभावसुकुलप्रख्यातकेतुर्बली ।

अथ विद्यावानिति नेतृगुणं वक्तुं पद्यमवतारयति—यमिति । यं रामं शैवाः शिवभक्ताः शिवेति नाम्ना समुपासते 'महारुद्रादभूत्प्रकृतिरतः सूत्रं ततोऽहमिति ततो विश्वम्' इति श्रुतेः । वेदान्तिनो ब्रह्मेति ' एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन ' इति श्रुतेः । बौद्धा बुद्ध इति ' प्राण्यालम्भनं संसृतिं नन्दयेति माम् ' इति श्रुतेः । प्रत्यक्षानुमानोपमानशब्दाभावार्थप्रतिपत्तिप्रमाणानीति प्रमाणेष्वेव निपुणा नैयायिकाः कर्तेति ' सनातनाः पशवः प्रविशन्ति प्रमेयानुभूतेः कर्तैव ततः ' इति श्रुतेः । जैनाज्ञाभिरता अर्हन्निति ' स्वभाव एवेश्वरो नान्योऽस्ति कदाप्यस्यानीदृशत्वापत्तेः ' इति श्रुतेः । मीमांसकाः कर्मेति ' कर्मणा जायते नश्यति भयाभयसुखानि ' इति श्रुतेः । एतैस्तदुपशिक्षितैर्मार्गैरेव यमुपासते सोऽयं रामो वाञ्छितफलं विदधातु । एतेन विद्यावत्त्वमुक्तम् । हरिरित्यनेन दुःखहारित्वात्परप्रेमगुणो दर्शितः । त्रैलोक्यवासिजनैस्तत्तद्देवताभजनेन तत्तत्फलं प्रतिनाथ्यते याच्यते इत्यनेन दातृत्वमुक्तम् ॥ ३ ॥ ४ ॥

इदानीं कथायोजनाय व्याख्याकृदात्मनः श्लोकचतुष्टयमवतारयति—

उर्वीबर्बरभूरिभारहरणे भूरिश्रवाः पुत्रतां यस्यार स्वमथो विधाय महितः पूर्णश्चतुर्धा विभुः ॥ ५ ॥ तेषामीश्वरतागुणैश्च जनुषा ज्यायानभूद्राघवो रामः सोऽप्यथ कौशिकेन मुनिना रक्षोभयाद्याचितः। राजानं स यशोधनो नरपतिः प्रादात्सुतं दुःखितस्तस्मै सोऽपि तमन्वगादनुगतः सौमित्रिणोच्चैर्मुदा ॥ ६ ॥ सुन्दस्त्रीदमनप्रमोदमुदितादास्थाय विद्योदयं रामः सत्यवतीसुतादथ गतस्तस्याश्रमं लीलया।क्लृप्ते कौशिकनन्दनेन च मखे तत्रागतान्राक्षसान्हत्वाऽमूमुचदाशु भाविविदसौ मारीचमुग्राकृतिम् ॥ ७ ॥ पूर्णे यज्ञविधौ यियासुरभवद्रामेण सार्धं मुनिः सीतासंवरणागताखिलनृपव्याभग्नवीर्यश्रियम् । श्रुत्वा तद्धनुरुत्सवं च मिथिलामास्थाय तेनाधिकं सत्कारैरुपलम्भितः पुनरगाच्चापाश्रितं मण्डलम् ॥ ८ ॥

आसीदित्यादि । पङ्क्तिरथो दशरथो भूपो राजा आसीत् । स कः । यस्य भूरिश्रवा नारायणः स्वं आत्मानमेव रामलक्ष्मणभरतशत्रुघ्नरूपेण चतुर्धा विधाय पुत्रतां आर प्राप । किमर्थम् । उर्व्यां ये बर्बरा राक्षसास्तेषां यो भूरिभारस्तन्नाशाय 'बर्बरो राक्षसोऽधमः' इति धरणिः । किंभूतः पुत्रार्थमिष्टः । अन्यत्सुगमम् ॥ ५ ॥

तेषां चतुर्णां पुत्राणां मध्ये जनुषा जन्मना ईश्वरत्वप्रतिपादकगुणैश्च रामो ज्यायानतिशयेन ज्येष्ठोऽभूदिति योज्यम् । अन्यत्सुगमम् ॥ ६ ॥

सुन्दनाम्नो रक्षसः स्त्री ताटका । सत्यवतीसुताद्विश्वामित्राद्विद्योदयम् । भाविवित् निमित्तभूतेनानेन मृगरूपेण रावणः सीतां हरिष्यतीति भाविवित् । शेषं सुगमम् ॥ ७ ॥ ८ ॥

तदा सीता ( आत्मगतम् )–

कमठपृष्ठकठोरमिदं धनुर्मधुरमूर्तिरसौ रघुनन्दनः।
कथमधिज्यमनेन विधीयतामहह तातपणः स्त-
वदारुणः ॥ ९ ॥

रामो लक्ष्मणं प्रति–

आद्वीपात्परतोऽप्यमी नृपतयः सर्वे समभ्यागताः
कन्यायाः कलधौतकोमलरुचेः कीर्तेश्च लाभः परः ॥
नाकृष्टं न च टङ्कितं न नमितं नोत्थापितं स्थानतः
केनापीदमहो महद्धनुरिदं निर्वीरमुर्वीतलम् ॥ १० ॥

तत्र रामं दृष्ट्वा सीता विचिकित्सति–कमठेति । इदं धनुः कमठ-पृष्ठवत् कठोरम् । रघुनन्दनो रामो मधुरमूर्तिः सुकुमाराङ्गः । अह-हेति खेदे । अनेन रामेणेदं धनुरधिज्यमधिकृतगुणं कथं विधीयताम् । अतस्तातस्य पितुः पणः ‘ कोऽपि धनुरधिज्यं करिष्यति तस्मै सीतां दास्यामि ’ इत्येवंरूपा प्रतिज्ञा स्तवाय स्तुत्यै दारुणोऽयोग्यः अस्तुत्य इति । यद्वा अविसर्गपाठे हे तात, तव पणो दारुण इति मानसोक्तिः । तातपणश्चेन्नाभविष्यत्तर्ह्यहं राममन्विष्यामीति भावः । ‘ स्तवः स्तोत्रं स्तुतिर्नुतिः ’ इत्यमरः ॥ ९ ॥

अथ रामः सीतासंशयमवधार्यात्मशक्तिं ज्ञापयितुं लक्ष्मणमनुव-दति–आद्वीपादिति । भो लक्ष्मण ! अमी नृपतय आद्वीपात्समभ्या-गताः । द्विर्गता आपो यस्मिन्निति द्वीपं सागरान्तर्वर्ती देशः । तमति-व्याप्य परतो लङ्कादेरपि । यद्वा द्वीपो जम्बूद्वीपस्तमभिव्याप्य परतो द्वीपान्तरादपि । तत्रापि सर्वे, न तु केचन । तेषां मध्ये केनापि इदं महद्धनुर्महतो रुद्रस्य धनुः । यद्वा महच्चेदं धनुश्च नाकृष्टम् । नन्वाक-र्षणं तिष्ठतु, न टङ्कितं टङ्कारवन्न कृतम् । एतदपि तिष्ठतु, न नमित-मपि । स्थानतोऽपि नोत्थापितम् । अहो महदाश्चर्यमिदमुर्वीतलं निर्वीरं

(लक्ष्मणो रामहृदयानन्दकन्दाङ्कुरोद्भवाय निजप्रचण्डदोर्दण्डयोर्महतीं प्रौढिं नाटयति—)

देव श्रीरघुनाथ किं बहुतया दासोऽस्मि ते लक्ष्मणो
मेर्वादीनपि भूधरान्न गणये जीर्णः पिनाकः कियान् ।
तन्मामादिश पश्य पश्य च बलं भृत्यस्य यत्कौतुकं
प्रोद्धर्तुं प्रतिनामितुं प्रचलितुं नेतुं निहन्तुं क्षमः ॥ ११ ॥

रावणपुरोहितो जनकं प्रति—

दातव्येयमवश्यमेव दुहिता कस्मैचिदेनामसौ
दोःक्रीडामशकीकृतत्रिभुवनो लङ्कापतिर्याचते ।

वीर एवात्र कोऽपि नास्ति । यद्वा इदं धनुर्निर्वीरं निर्गताः पराजिता मानभङ्गात्पलायिता वा वीरा यस्मात्तदिति वाक्यान्तरेणेदंशब्दस्य पुनरुक्तिः । उर्वीतलमिति सप्तम्यर्थे प्रथमान्तपदमार्षम् । नन्वेतदाकर्षणादौ को लाभ इति चेत्तत्राह—कलधौतस्य दाहोत्तीर्णहेम्न इव कोमला रुचिर्यस्यां एवंभूतायाः कन्याया लाभः । 'कलधौतं तप्तहेम स्यात्' इति धरणिः । 'कन्येयं कलधौतकोमलरुचिः कीर्तिश्च लाभोऽपरः' इति पाठेऽप्ययमेवार्थः । इयं कन्या सीता तल्लाभः इति सीतायाः पित्राद्यधीनतया कन्यात्वम् ॥ १० ॥

देवेति । पूर्वार्धं स्पष्टमेव । तत्तस्मात्कारणान्मामादिशाज्ञापय । भृत्यस्य मम यत्कौतुकमाश्चर्यकर्तृ बलं तत्पश्य । पश्येत्यादरे वीप्सा । किं बलमिति चेत्तत्राह । एतद्धनुः प्रोद्धर्तुं, भूमेः प्रतिनामितुं नम्रीकर्तुं, प्रचलितुं कोणगुणालोकनाय चपलयितुं, नेतुमितो गमयितुं, निहन्तुं भग्नीकर्तुं क्षमोऽस्मि । किंपुनराकर्षणमात्रमिति भावः । 'पिनाकोऽजगवं धनुः' इत्यमरः । ममैवात्रेदृशी शक्तिः । भवन्स्तु ब्रह्माण्डोद्धरणसहा इति द्योतितम् ॥ ११ ॥

तयोरेवं वदतोरेतदन्तरमासाद्य रावणपुरोहितो जनकमनुवदति

तत्किमूढवदीक्षसे ननु कथागोष्ठीषु नः शासते तद्वृत्तानि परोरजांसि मुनयः प्राच्या मरीच्यादयः ॥१२॥

पुना रामं प्रति–

समन्तादुत्तालैः सुरसहचरीचामरमरु-
त्तरङ्गैरुन्मीलद्भुजपरिघसौरभ्यशुचिना ।
स्वयं पौलस्त्येन त्रिभुवनजिता चेतसि धृता
मरे राम त्वं मा जनकपतिपुत्रीमुपयथाः ॥ १३ ॥

जनकः–

माहेश्वरं धनुः कुर्यादधिज्यं चेद्ददामि ताम् ।

पुरोहितः–

गुरोः शंभोर्धनुर्नो चेच्चूर्णतां नयति क्षणात् ॥१४॥

दातव्येति । भो जनक, इयं सर्वोत्तमा दुहिता कस्मैचिद्याचतेऽपि वराय दातव्यैव । असौ प्रसिद्धः कुलाचारः । एतेन कौलिन्यमुक्तम् । लङ्कापतिः । अनेनैश्वर्यमुक्तम् । दोःक्रीडामशकीकृतत्रिभुवनः । एतेन कल्पत्वमुक्तम् । भुजक्रीडानिर्जितत्रिभुवनः । यद्वा भुजक्रीडया मशकीकृतं निश्चेतनीकृतं त्रिभुवनं येन । 'दंशाचेतनयोर्मशा' इति विश्वः । मश एव मशकः । एवंभूतो रावणः एनां स्वयमेव याचते तत्तस्मादज्ञातार्थवदीक्षसे विचारयसि । ननु वितर्के । प्राग्भवाः प्राच्या मरीच्यादयो मुनयस्तद्वृत्तानि रावणचरितानि कथागोष्ठीषु नोऽस्माञ्छासते कथयन्ति । किंभूतानि । परोरजांसि शुद्धानि । यद्वा रजोभ्यो भूरेणुभ्यः पराण्यधिकानि परोरजांसि । परस्शब्दं निपातनं मन्यते भोजराजः । इत्यादिविशिष्टगुणोऽयं याचते तस्मादस्मै दातव्येति भावः । 'ननु कथागोष्ठीषु तस्यासती' इति पाठे नु इति वितर्के । गोष्ठीषु पुरावृत्तवर्णनरूपासु तस्य रावणस्य कथा इयमितिरूपा काचित्सासती मिथ्या न । सत्यैवेत्यर्थः । यद्वा तस्य लङ्कापतेर्वृत्तं शीलमिव

जनकः विहस्य–

शंभोरावासमचलमुत्क्षेप्तुं भुजकौतुकी ।
माहेश्वरं धनुः क्रष्टुमर्हते दशकंधरः ॥ १५ ॥

जनकः सीतां प्रति सखेदम्–

माहेश्वरो दशग्रीवः क्षुद्राश्चान्ये महीभुजः ।
पिनाकारोपणं शुल्कं हा सीते किं भविष्यति ॥ १६ ॥

सीता–

'कमठपृष्ठम्' इत्यादि पुनः पठति । रावणपुरोहितः सक्रोधम्–

सार्धं हरेण हरवल्लभया च देव्या हेरम्बषण्मुखवृषप्रमथावकीर्णम् । कैलासमुद्धृतवतो दशकंधरस्य केयं च ते धनुषि दुर्मद दोःपरीक्षा ॥ १७ ॥

शीलं येषां तानि । मध्यमपदलोपी समासः । रजसः प्रकृतेः परं परोरजः परब्रह्म तद्रूपाणि । यद्वा तस्य वृत्तानि शीलान्यप्याचरन्तीति शेषः । ननु महीयान्कथं याचते इति चेत्तत्राह । साधारणो निरातङ्कं कन्यामन्योऽपि याचते । किं पुनर्जगतां नेता स पौत्रः परमेष्ठिनः ॥ १२ ॥ १३ ॥ १४ ॥

धनुराकर्षणे रावणशक्तिं द्योतयति काक्वास्या–दशकंधरः माहेश्वरं धनुः क्रष्टुमाक्रष्टुं योग्योऽस्ति । किंभूतः । शंभोः आवासस्थानमचलमुत्क्षेप्तुमुद्धर्तुं भुजकौतुकी भुजे कौतुकमस्यास्तीति गुरोर्गृहमुद्धर्तुम् । किं पुनस्तद्धनुरिति भावः ॥ १५ ॥

दशग्रीवो धनुरारोप्य त्वां लङ्कां नेष्यति । अथवा कश्चिन्नृपस्त्वां दूरदेशं नेष्यतीति खेदः । इत्यर्थं श्रुत्वा सीता पुनः खिद्यमाना तदेव 'कमठपृष्ठकठोरम्' इति पद्यं पुनः पठति । पुनः पठिते पुरोहितः सक्रोधम् ॥ १६ ॥

हे दुर्मद दुर्वीराग्रह, धनुषि दशकंधरस्य दोःपरीक्षा भुजबलज्ञान-

जनकः—

**शृणुत जनककल्पाः क्षत्रियाः शुल्कमेते दशवदनभुजानां कुण्ठिता यत्र शक्तिः । नमयति धनुरैशं यस्तदारोपणेन त्रिभुवनजयलक्ष्मीर्जानकी तस्य दाराः ॥ १८ ॥**

रूपा का न कापि । ते तव इयं धनुरधिज्यकरणरूपा परीक्षा का ? न कापीत्यर्थः । किंविशिष्टस्य । कैलासं गिरिं धृतवतः । अन्यत्तु सुगमम् । यद्वा किंविशिष्टस्य ते । हरेण नैपुण्येन सार्धं कैलासं नेतृगुणमुद्धृतवत उच्चैर्हृदि धारयतः । ईदृङ्नेता नेदृगिति ज्ञानवतः । 'हरो नैपुण्यरुद्रयोः' इति चरकः । 'गुरौ नेतृगुणे भावे कैलासे स्त्रीहरेऽपि च' इति शाश्वतः । च पुनः वल्लभया देव्या सार्धं देवी द्योतमाना वल्लभा कार्याकार्यपरीक्षा तया सहेत्यर्थः । 'कार्याकार्यविचारेक्षा वल्लभा च जयध्वनिः' इति विश्वः । किंविशिष्टं नेतृगुणम् । हेरम्बषण्मुखवृषा याः प्रमथाः विद्यास्ताभिराकीर्णं युक्तम् । हेरम्बो गणेशस्तस्यैवाग्रपूज्यत्वं विघ्ननाशाय । विद्या षण्मुखस्यैव शत्रुसंहारविद्या । वृषो धर्मस्यैव लोकपालनमिव एताभिर्युक्तः । एतद्विशेषणत्रयेण सद्बुकशालित्वातिकल्पत्वरञ्जितलोकत्वादयो गुणा दर्शिताः । हरेण हरवल्लभया चेति पदद्वयेन विद्याबलत्वमुक्तम् । किं तत् । हरो रुद्रस्तद्वत् । यथा रुद्रः सर्वं जानाति तथाखिलनेतृगुणाज्ञानतस्तव धनुरुद्धरणमात्रे का परीक्षेति भावः ॥ १७ ॥

जनकोऽपि पुरोहितमाक्षिप्य स्वप्रतिज्ञातं राज्ञः श्रावयति—जानकी जन एव जनकः, जनानां समूहो जानकं जानकमस्यास्तीति जानकी जनसमृद्धिमान् । अन्यथा सीतावर्णनेन वैरस्यत्वमायाति अतो जानकीपदेन जनक एव । एतेनैतस्य निर्भयत्वं सूचितम् । भोः क्षत्रियाः, शृणुत । किंविशिष्टाः । जनककल्पा जनको रुद्रः बलेन । ततः किंचिन्न्यूना इत्यर्थः । 'लोकरुद्रनृपव्याजतातेषु जनकः पुमान्'

**श्रीरामः नाट्यम्—**

**(कपोले जानक्याः करिकलभदन्तद्युतिमुषि स्मर-स्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् । मुहुः पश्य-ञ्छृण्वन् रजनिचरसेनाकलकलं जटाजूटग्रन्थिं रचयति रघूणां परिवृढः ॥ १९ ॥ गृहीतहरको-दण्डे रामे परिणयोन्मुखे । पस्पन्द नयनं वामं जानकीजामदग्न्ययोः ॥ २० ॥)**

इति धराणिः । 'शुल्कम्' इति पाठे जनकस्य मम शुल्कं पणं शृणुत । तमाह । यत्र धनुषि दशवदनभुजानां शक्तिः कुण्ठिता जाता, तदैशं धनुः कोऽपि नमयति तदारोपणेनैव मैथिली तस्य तदारोपणकर्तु-र्दाराः स्यात् । दारशब्दो भून्म्येव । किंविशिष्टा त्रिभुवनजयल-क्ष्मीः । यत्प्राप्तौ त्रिभुवनं जितं भवतीति भावः । धनुरारोपणेन तद्वा-सिजनावनात् ॥ १८ ॥

इत्युक्ते श्रीरामः सर्वतोऽवलोक्य तदुत्थानं नाटयति—'अत्र रामे चित्ररसः प्रतिपाद्यते' । धनुःस्थाने तिर्यङ्मुखमुपविष्टाया जानक्या कपोले स्मरस्मेरं सकामस्मितं यथा स्यात्तथा वक्त्रकमलं निजमुखार-विन्दप्रतिबिम्बं पश्यन् । एतेन मधुररसो दर्शितः । किंविशिष्टे कपोले करिकलभः करिशावकस्तस्य दन्तयोर्द्युतिं किंचित् पीतोज्ज्वलतां मुष्णा-तीति तस्मिन् । एतेन सीताया अपि चरमकैशोरत्वमुक्तम् । स्वयंवरा-गतरक्षःसेनाकोलाहलं च शृण्वन् वयं बलाद्धरिष्याम इत्येवंरूपम् । एतेन भयानको दर्शितः । जटाजूटसमूहग्रन्थिं रचयति । अनेन वीर-रसो दर्शितः । 'व्रतिनस्तु सटा जटा' इत्यमरः । गण्डोड्डमरपुलकं गण्डव्यापकम् । एतेनोद्भास्वराख्यः स्निग्धसात्त्विको दर्शितः । रसत्र-येऽप्युड्डमरः प्रचण्डः । परिवृढोऽधिपः । उक्तं मदीयरसोदधौ—'शबलत्वं हि रसनां सर्वेषामेव जायते यत्र । दशमः सोऽत्र निरुक्तश्चित्ररसः सर्व-रससारः' इति ॥ १९ ॥

धनुरुद्धरणडम्बरे सीताजामदग्न्ययोः शुभाशुभं द्योतयति—गृही-तेति । पस्पन्द अस्फुरत् । तदुक्तं वसन्तराजे—' चक्षुर्वामं मृग-

( लक्ष्मणो रामे सज्जं धनुः कुर्वति सति पृथ्व्यादीनि भुवनान्यधो यास्यन्तीत्याशङ्क्याह– )

पृथ्वि स्थिरा भव भुजंगम धारयैनां
त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तन्त्रितये दिधीषां
रामः करोति हरकार्मुकमाततज्यम् ॥ २१ ॥

पृथ्वी याति विनम्रतां फणिपतेर्नम्रं फणामण्डलं
बिभ्रत्क्षुभ्यति कूर्मराजसहिता दिक्कुञ्जराः कातराः ।
आतन्वन्ति च बृंहितं दिशि भटैः सार्धं धराधारिणो
वेपन्ते रघुपुंगवे पुरजितः सज्जं धनुः कुर्वति ॥ २२ ॥

तदा च–

उत्क्षिप्तं सह कौशिकस्य पुलकैः,सार्धं मुखैर्नामितं
भूपानां,जनकस्य संशयधिया साकं समास्फालितम् ।
वैदेहीमनसा समं च सहसा कृष्टं ,ततो भार्गव-
प्रौढाहंकृतिदुर्मदेन सहितं तद्भग्नमैशं धनुः ॥ २३ ॥

हशो जयकारि भृशं त्वरा । तदेव पुरुषस्यारात्स्फुरितं भयशंसनम् ' इति ॥ २० ॥

इदं द्वितयं पृथ्वी भुजंगमं चेति । तन्त्रितये तस्मिंस्त्रितये भूभुजंगमकुर्मरूपे । दिधीषां धर्तुमिच्छां कुरुतेति ॥ २१ ॥

अत्र भूतार्थे यातीत्यादिवर्तमाननिर्देशः कवेस्तात्कालिकानुभवेन । ' स्फटायां तु फणा द्वयोः ' इत्यमरः । बृंहितं करिगर्जितम् ' इत्यमरः । पुरजितस्त्रिपुरजेतुः रुद्रस्य ॥ २२ ॥

अथ धनुर्भङ्गे नानारसानुभवाच्चित्ररसं दर्शयितुं पद्यमवतारयति– उत्क्षिप्तमिति । कौशिके वत्सलरसो जातः । अत्र हर्षः संचारि हर्षोत्पुलका इति ज्ञानम् । भूपेषु भयानकरसः । अत्र दैन्यं संचारि दैन्यादेव मुखनमनम् । अत्र भीषणा त्रिविधा । तत्र प्रभावेनैव रामे भीषणत्वं, जनके करुणारसो जातः । अत्र ग्लानिः संचारी सा

शंभौ यद्गुणवल्लरीमुपनयत्याकृष्य कर्णान्तिकं
भ्रश्यन्ति त्रिपुरावरोधसुदृशां कर्णोत्पलग्रन्थयः।
स्वं चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो
भिद्यन्ते वलयानि दाशरथिना तद्भग्नमैशं धनुः॥२४॥

अपि च-

तद्ब्रह्ममातृवधपातकिमन्मथारिक्षत्रान्तकारिकर-
संगमपापभीत्या। ऐशं धनुर्निजपुरश्चरणाय नूनं
देहं मुमोच रघुनन्दनपाणितीर्थे ॥ २५ ॥ त्रुट्य-
द्भीमधनुःकठोरनिनदस्तत्राकरोद्विस्मयं त्रस्यद्वा-
जिरवेरमार्गगमनं शंभोः शिरःकम्पनम्। दिग्द-
न्तिस्खलनं कुलाद्रिचलनं सप्तार्णवोन्मेलनं वैदे-
हीमदनं मदान्धदमनं त्रैलोक्यसंमोहनम् ॥ २६ ॥

चाधेर्जाता आध्यनुभावः संशय इति ज्ञानम्। वैदेह्यां मधुररसो जातः। मनआकर्षणमेवात्रानुभावः। रामे वीररसः। अत्र स्पर्धोद्दीपनं परशुरामो गत इति ज्ञानम्। अत्र सर्वरसानामुद्दीपनविभावो राम एव ॥२३॥

धनुषो महत्त्ववर्णनेन रामे महत्त्वमवतारयति-शंभाविति। शंभौ रुद्रे यद्गुणवल्लरीं प्रत्यञ्चिकामाकृष्य कर्णान्तिकमुपनयति सति, तदा त्रिपुरावरोधसुदृशां कर्णोत्पलग्रन्थयो भ्रश्यन्ति। यदा चेमा गुणवल्लरीमुन्मुच्य परित्यज्य स्वमात्मीयं प्रकोष्ठकमास्फालयति तदा तासामेव त्रिपुरसुदृशां वलयानि कङ्कणानि भिद्यन्ते। तदीदृग्धनुर्दाशरथिना भग्नमिति महत्त्वम् ॥ २४ ॥

नन्वत्र तदुत्थापनमेव पणः, किमर्थं तद्रामेण भग्नमिति चेत्तत्राह- तत् ऐशं धनुः रामहस्ततीर्थे देहं मुमोच त्यक्तवान्। किमर्थं, निजपुरश्चरणाय पापप्रणाशार्थम्। कथं पापसंभावना ब्रह्ममातरौ ब्रह्मा च माता च ब्रह्ममातरौ तयोर्वधस्तेन पातकिनौ यौ मन्मथारिक्षत्रान्तकारिणौ तयोः करसंगमाद्यत्संसर्गपापं तद्भीत्या। अन्योऽपि पापस्तीर्थे देहं त्यक्त्वा शुद्धो भवतीति प्रसिद्धम् ॥ २५ ॥

तत्र तस्मिन्नवसरे त्रुट्यद्भज्यमानं भीमो रुद्रस्तद्धनुस्तस्य कठोरः

रुन्धन्नष्ट विधेः श्रुतीर्मुखरयन्नष्टौ दिशः क्रोडयन्
मूर्तीरष्ट महेश्वरस्य दलयन्नष्टौ कुलक्ष्माभृतः ।
तान्यक्ष्णा बधिराणि पन्नगकुलान्यष्टौ च संपादय-
न्नुन्मीलत्ययमार्यदोर्बलदलत्कोदण्डकोलाहलः ॥२७॥

-लक्ष्मणः— (परशुराम से लक्ष्मण)

जामदग्न्यरुद्धटथद्धैरवधनुःकोलाहलामर्षमूर्छितः
प्रलयमारुतोद्धूतकल्पान्तानलवत्प्रदीप्तरोषानलः ।

रामं प्रति, परशुरामं सूचयन्—

यद्बभञ्ज जनकात्मजाकृते राघवः पशुपतेर्म-
हद्धनुः । तद्धनुर्गुणरवेण रोषितस्त्वाजगाम
जमदग्निजो मुनिः ॥ २८ ॥

परुषो निनादः सविस्मयमाश्चर्यमकरोत् । तदेव द्योतयति—त्रस्यन्तो वाजिनो यस्यासौ त्रस्यद्वाजी स चासौ रविश्च तस्य शब्दश्रवणमात्रेण त्रस्ताश्वस्य रवेरमार्गगमनमकरोदिति सर्वत्रानुबद्ध्यते । सप्तार्णवाना-मुच्चैराकाशमेलनं ऐक्यतां नतु भूमौ । तथा सति भूलयः स्यात् । एतत्पद्येनाद्भुतरसो दर्शितः । उक्तं च मदीयरसोदधौ—'यामोचितैर्वि-भावैः पुष्टिं याता रतिर्हि विस्मयजा । रसोऽद्भुताख्यः सः स्यात्पूर्णोऽपि स्याद्विभावोऽत्र' ॥ २६ ॥

तमेवाद्भुतरसं विशिनष्टि—रुन्धन्निति । आर्यो रामस्तस्य भुज-बलेन दलद्भज्यमानो यः कोदण्डो धनुस्तस्य कोलाहलः शब्दाडम्ब-रोऽयमुन्मीलति प्रकटीभवति । किं कुर्वन् । विधेर्ब्रह्मणः अष्ट श्रुतीः कर्णान्निरुन्धन्व्यावृण्वन्, अष्टौ दिशः मुखरयन्प्रतिध्वनिना वाचा-लिताः कुर्वन्, महेश्वरस्याष्ट मूर्तीः क्रोडयन्व्याकुलयन् । तथा चागमे—'भूर्जलं वह्निराकाशं वायुर्यज्वा शशी रविः ॥ इत्यष्टौ मूर्तयः शंभो-र्मङ्गलं जनयन्तु नः ' इति । अष्टौ कुलक्ष्माभृतः कुलगिरीन्विस्फोट-यन् । तानाहागमः—'विजयः कुमुदो नीलो निषधो हिमवानथ ॥ ज-यन्तः कालनिषधो वाह्लीकोऽष्टौ दिगद्रयः ' इति । एते पूजन-विधाने । पन्नगकुलान्यपि तत्रैव—'नागसर्पोरगाखुभुग्दन्दशूकविजि-

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो भस्मस्निग्धपवित्रलाञ्छितमुरो धत्ते त्वचं रौरवीम्। मौञ्ज्या मेखलया नियन्त्रितमधो वासश्च माञ्जिष्ठकं पाणौ कार्मुकसाक्षसूत्रवलयं दण्डोऽपरः पैप्पलः॥ २९॥
पित्र्यमंसमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधत्। यः ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः॥ ३०॥

ह्वगाः॥ मायिकामृतपालेयशेषाख्याश्चाष्टजातयः' सर्पेति प्रौढितः सर्वेषु पङ्कजं यथा स्थलजेष्वपि कमलमिति। 'भिन्दन् भूत लम्—' इत्यादि पद्यमत्र केचित्पठन्ति तत्प्रक्षिप्तमस्ति। रुन्धन्नित्य नेनैकार्थत्वात्॥ २७॥ ॥ २८॥

मुनिराजगामेति पूर्वेण संबन्धः। पृष्ठतस्तूणीद्वयं निषङ्गयुग्मं धत्ते, एतेन सर्वं द्वितीयान्तं योज्यम्। रुरुश्चित्तलो मृगः। मञ्जिष्ठया रं माञ्जिष्ठकं वासः। उक्तं च—'ब्रह्मव्रतधरो वासो वसानो रक्तमुत्तमम् इति पाराशरः। किंविशिष्टो मुनिः। दण्डः 'अर्शआदिभ्योऽच्'। प्रशस्तो दण्डोऽस्यास्तीति दण्डः। ब्रह्मव्रतेपि क्षत्रदमनः। पुन किंविशिष्टः। न कश्चित्परः श्रेष्ठो यस्मात्सः अपरः। पुनः पै प्पलः पिप्पलो ब्रह्मसूत्रमस्यास्तीति पैप्पलः। स्वार्थे तद्धितः 'अर् आदिभ्योऽच्' यज्ञोपवीतवानिति 'अश्वत्थे ब्रह्मसूत्रे च पिप्पलोः स्त्री गुणेष्वपि' इति धरणिः। 'दण्डं परं पैप्पलम्' इति पा अश्वत्थस्य दण्डं धत्ते। 'बिभृयात्पैप्पलं दण्डं ब्रह्मव्रतधरः सदा' इत् क्तत्वात्। अपरः पैप्पलं दण्डं धत्ते इति वाऽर्थः। समुच्चयोऽ मलंकारः। 'पदार्थानामनेकेषां यत्रैकस्मिन्निबन्धनम्॥ एकया क्रि यया विज्ञैः स प्रोक्तो हि समुच्चयः'। वैरिणोरपि वीरशान्तरसयो रत्र युक्त्या योजनं, अदोषाय। 'युक्त्या कृतोपि संयोगस्तयोर्बाढं दुष्यति' इत्युक्तत्वात्॥ २९॥ ३०॥

आजन्म ब्रह्मचारी पृथुलभुजशिलास्तम्भवि-
भ्राजमानज्याघातश्रेणिसंज्ञान्तरितवसुमतीच-
क्रजैत्रप्रशस्तिः । वक्षःपीठे घनास्त्रव्रणकि-
णकठिने संक्ष्णुवानः पृषत्कान्प्राप्तो राजन्य-
गोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ॥ ३१ ॥
सोऽयं सप्तसमुद्रमुद्रितमहीपस्यार्जुनस्योद्धतं
छित्त्वा भैरवसंगरेऽतिजरठं कण्ठं कुठारेण यः ।
रेवातीरनिरोधहेतुगहनं बाह्वोः सहस्रं जवा-
त्काण्डं काण्डमखण्डयत्पितृवधामर्षेण वर्षीयसा ३२

आजन्मेति ॥ एवंभूतो जामदग्न्यः संप्राप्त इत्यन्वयः । पृथुलौ मांसलौ भुजावेव शिलास्तम्भौ तयोर्विभ्राजमाना या ज्याघातश्रेणी प्रत्यञ्चिकास्फोटनपङ्क्तिः तस्याः संज्ञया सूचनेनान्तरिता स्वस्मिन्विज्ञापिता पृथ्वीचक्रस्य विजयस्य प्रशस्तिर्येन सः । 'नामसूचनयोः संज्ञा' इति विश्वः । वक्षःपीठे पृषत्कान्बाणान् संक्ष्णुवानस्तीक्ष्णी कुर्वाणः । घनानि यान्यस्त्राणि तेषां व्रणैः यः किणः मांसासृग्विवर्तः तेन कठिने । 'मांसासृग्भरणं किणः' इति धरणिः । राजन्यगोष्ठ्यः क्षत्रियसमूहा एव वनगजास्तद्धननार्थं या मृगया तस्यां कौतुकमस्यास्तीति ॥ ३१ ॥

एवंभूतमेनं दृष्ट्वा लक्ष्मणः रामं स्मारयति—हे राम, अयं सोऽस्ति । स कः । यः भैरवसंगरे अतिभयंकरे रणे उद्धतं अनम्रं यथा स्यात्तथा कुठारेण परशुना अर्जुनस्य राज्ञः कण्ठं छित्त्वा पूर्वं मूलादुत्कृत्य पश्चाज्जवाद्वेगेन बाहुसहस्रं काण्डं काण्डं अखण्डयत् । नन्वर्जुनोऽल्पबल इति चेत्तत्राह—सप्तभिः समुद्रैः मुद्रिता वेष्टिता वसुमती मही तस्याः पालकस्य । किंविशिष्टं कण्ठम् । अतिजरठमतिकठोरम् । 'समौ जरठकर्कशौ' इति विश्वः । कीदृग्बाहुसहस्रम् । रेवा नर्मदा तत्तीरनिरोधाय हेतुभूतं गहनम् । स्त्रीभिः क्रीडन्येन भुजसहस्रेण सरित्प्रवाहमेवारुणत्तद्भुजसहस्रम् । केन हेतुनाऽखण्डयत् । वर्षीयसा वृद्धिंगतेन । पितृवधजन्यक्रोधेनेत्यर्थः ॥ ३२ ॥

येन त्रिःसप्तकृत्वो नृपबहलवसामांसमस्ति-
ष्कपङ्कप्राग्भारेऽकारि भूरिच्युतरुधिरसरिद्वा-
रिपूरेऽभिषेकः । यस्य स्त्रीबालवृद्धावधि नि-
धनविधौ निर्दयो विश्रुतोऽसौ राजन्योच्चां-
सकूटक्रथनपटुरटद्धोरधारः कुठारः ॥ ३३ ॥

जामदग्न्यः क्रोधं नाटयित्वा—

केनेदं कुपितकालदन्तपत्रान्तरालमिच्छता धनुर्भग्नम्।

रामः साशङ्कम्—

पार्वत्या निजभर्तुरायुधमिति म्लानं यदभ्य-
र्चितं निर्मोकेन च वासुकेन वलितं यत्सादरं
नन्दिना ॥ भव्यं यत्त्रिपुरेन्धनं धनुरिदं तन्म-
न्मथोन्माथिनः सत्येवं मयि रामनामनि भु-
वि द्वेधा कृतं दृश्यते ॥ ३४ ॥

रामं स्मारयित्वा पुनस्तत्परशुं स्मारयति । येनेति । यस्य परशु-रामस्यासौ कुठारो विश्रुतः सर्वतो विख्यातः सोऽयमिति पूर्वेणैव संबन्धः । असौ कः । येन कुठारेण स्त्रीबालवृद्धावधि स्त्रियश्च बालाश्च वृद्धाश्च तत्पर्यन्तं यद्धननविधानं तस्मिन्प्रवृत्ते सति भूरिच्युतरुधि-रसरिद्वारिपूरे अभिषेकः सर्वं हननव्रतपूर्तिस्नानं अकारि कृतम् । यूनां का वार्तेति भावः । किंविशिष्टे वारिपूरे । नृपाणां या बहल-वसा मांसं च मस्तिष्कं ( मेंदु इति भाषायाम् ) तेषां प्राग्भारः सं-मर्दो यस्मिन् ' शीर्षण्यमांसं मस्तिष्कम् ' इति विश्वः । ' प्राग्भारव्र-जसंमर्दाः ' इत्यपि । किंविशिष्टः कुठारः । राजन्यानां उन्नतांसा एव कूटा गिरयस्तेषां क्रथने दारणे पट्वी रटन्ती घोरा धारा यस्य सः । ' क्रथनोज्जासनान्यपि ' इत्यमरः ॥ ३३ ॥

भो मुने ! मन्मथोन्माथिनः रुद्रस्य तद्धनुः मय्येव मामुपश्लिष्य मामासाद्य द्विधा कृतं मध्यतो भग्नं दृश्यते । औपश्लेषिकोऽयमाधारः। भुवि एवं सति भूमौ एवं धनुर्भग्नं कृत्वा सति वर्तमाने । अन्यत्सुगमम्। ' समौ निर्मोककञ्चुकौ ' । म्लानं शत्रूणां हर्षक्षयकारि त्रिपुरं इन्धनं दाह्यं यस्य तत् ॥ ३४ ॥

जामदग्न्यः –(स्फीतफूत्कारप्रफुल्लनासापुटकोटरोद्गीर्णप्रभूतगर्वानलोच्छलितकालकूटधूमस्तोमाच्छादितदिङ्मण्डलः—)अरेरे निजकुलकमलिनीप्रालेयवर्ष दाशरथे ! कथमकाण्डमदान्तप्रचण्डदोर्दण्डकोदण्डखण्डचण्डिमाडम्बरेणापूरितं जगत्त्रयम् । सकलवसुमतीमण्डलाखण्डलकुमुदिनीपक्षलक्ष्मीहरणकिरणमालिनं न मां वेत्सि । येनोक्तः कार्तवीर्यः—

सहस्रबाहुस्त्वमहं द्विबाहुस्त्वं सैन्ययुक्तो-
ऽस्यहमेक एव । त्वं चक्रवर्ती मुनिनन्दनो-
ऽहं तथापि नौ पश्यतु तर्कमर्कः ॥ ३८ ॥

उत्कृत्योत्कृत्य गर्भानपि शकलयितुं क्षत्रसं-

' व्रातः स्तोमः समूहोऽस्त्री ' अन्यत्सुगमम् । ' स्फीतेन फूत्कारेण प्रफुल्लाभ्यां नासापुटाभ्यां नासाविवराभ्यां उद्गीर्णो बहिर्भूतः प्रभूतो महान् गर्वोऽहंकारो यस्य तादृशरोषानल एव कालकूटं विषं तस्य धूमस्तोमेनाच्छादितमावृतं दिशां मण्डलं समूहो येन ' इति टीकान्तरात् । अरेरे इत्याक्षेपे । अकाण्डमनवसरं प्रचण्डौ यौ दोर्दण्डौ तयोः कोदण्डखण्डनरूपो यश्चण्डिमा चण्डत्वं तदाडम्बरेण जगत्त्रयं कथमापूरितम् ' काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ' इत्यमरः । जातं मां त्वं न वेत्सि ? । किंभूतम् । सकलवसुमती पृथ्वी तस्या मण्डलस्य ये आखण्डला इन्द्राः राजानस्त एव कुमुदिन्यस्तासां पक्षस्य या लक्ष्मीः राज्यादिरूपा तद्धरणे किरणमालिनं सूर्यम् । तं कम् । येन कार्तवीर्यो नृप इत्युक्तः ।

तदेवाह । तर्कं न्याय्यम् ! शेषं सुगमम् ॥ ३८ ॥

हे मन्द कार्याकार्यमूढ । मे स्वभावः सर्वभूतैर्न विदितो न ज्ञातः न, अपितु विदित एव । अहो यद्भवता न ज्ञातस्तदाश्चर्यमित्यहो-

तानरोषादुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंश्यान् । पित्र्यं तद्रक्तपूर्णप्रतिवचनमहो मन्द मन्दायमानक्रोधाग्नेः सर्वतो मे स खलु न विदितः सर्वभूतैः स्वभावः ॥ ३६ ॥

अपि च—

आश्चर्यं कार्तवीर्यार्जुनभुजविपिनच्छेदलीलाविदग्धः केयूरग्रन्थिरत्नोत्करकषणरणत्कारघोरः कुठारः । तेजोभिः क्षत्रगोत्रप्रलयसमुदितद्वादशार्कानुकारः किं न प्राप्तः स्मृतिं ते स्मरदहनधनुर्भङ्गपर्युत्सुकस्य ॥ ३७ ॥

पदेन ध्वनितम् । स्वभावमेव द्योतयति—किंविशिष्टस्य मे । क्षत्रसंताने यो रोषस्तस्माद्गर्भानप्युत्कृत्योत्कृत्य पुनःपुनरुदरान्निःसार्य शलकयितुं खण्डयितुं उद्दामस्य गतदयस्य । पुनः सर्वतः सर्वान्स्त्रीवृद्धतरुणरूपपुरुषान्राज्ञां वंशेषु जातान्क्षत्रियानेकविंशत्यवधि एकविंशतिवारं विशसतो घातयतः । पुनः पित्र्यं । पितॄणामिदं पित्र्यं तर्पणादि प्रयोगे द्वितीया । मन्दायमानः क्रोधाग्निर्यस्य यथा यथा पित्र्यमकरवं तथा तथा शान्तक्रोधोऽभवमिति भावः । किंविशिष्टम् । सर्वतः इति सर्वं यथा स्यात्तथा तद्रक्तपूर्णप्रतिवचनं तेषां क्षत्रियाणां रक्तेन पूर्णं निष्पादितं प्रतिवचनं प्रतिकरणीयं यस्मिंस्तत् । यत्तिलकुशयवादिसूचकं वचनं तद्रक्तेनैव संपादितमिति भावः । एवंभूतोऽपि भवता न ज्ञातस्तदाश्चर्यम् ॥ ३६ ॥

पुनराश्चर्यमनुवदति—हे राम ! मदीयः कुठारः ते तव स्मृतिं स्मरणविषयं न प्राप्तः ? किंतु प्राप्त एव । मामनादृत्यैतत्कृतमिति भावः । ममानादरणमेवाश्चर्यम् । किंविशिष्टः कुठारः । कृतवीर्यस्यापत्यं कार्तवीर्यः स चासावर्जुनश्च तस्य भुजा एव विपिनं तस्य उच्छेदलीलायां विदग्धः । पुनः तेजोभिः क्षत्रगोत्रप्रलये समुदिताः उदयं प्राप्ताः द्वादशार्काः द्वादशसूर्यास्तेषामनुकारः अनुकर्ता । अन्यत्सुगमम् । ‘ कषणं घर्षणं समे ’ इति धरणिः । ‘ बहुत्वमुत्करो व्रातः ’ इत्यपि ॥ ३७ ॥

रामः सानुनयम्—

बाह्वोर्बलं न विदितं न च कार्मुकस्य त्रैयम्बकस्य महिमा न तवापि सैषः । तच्चापलं परशुराम मम क्षमस्व डिम्भस्य दुर्विलसितानि मुदे गुरूणाम् ॥ ३८ ॥

अपिच—

अयं कण्ठः कुठारस्ते कुरु राम यथोचितम् ।
निहन्तुं हन्त गोविप्रान्न शूरा रघुवंशजाः ॥३९॥

सवैदग्ध्यम्—

भो ब्रह्मन्भवता समं न घटते संग्रामवार्तापि नो सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्धनि । यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुजामस्माकं भवतो यतो नवगुणं यज्ञोपवीतं बलम् ॥ ४० ॥

जातः सोऽहं दिनकरकुले क्षत्त्रियः श्रोत्रियेभ्यो विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः । अस्मिन्वंशे कथयतु जनो दुर्यशो वा यशो वा विप्रे शस्त्रग्रहणगुरुणः साहसिक्याद्बिभेमि ॥ ४१ ॥

परशुरामः ( साभ्यसूयम् )—

येन स्वां विनिहत्य मातरमपि क्षत्त्रास्त्रमध्वा-

बाह्वोरिति । त्र्यम्बको रुद्रस्तस्येदं धनुस्त्रैयम्बकम् ' तनिमेति वा पाठः ' तत्र तनोर्भावस्तनिमा निःसारत्वमिति । डिम्भो माणवकः ' डिम्भो माणवकः शिशुः ' इति विश्वः । एतेन धनुर्भङ्गस्येषत्करत्वं कथितम् ॥ ३८ ॥

इदानीं गर्भिताक्षेपमाविष्करोति—अयमिति सुगमम् ॥ ३९ ॥

पुनरपि सवैदग्ध्यमाक्षिपति—भो ब्रह्मन्निति ॥ ४० ॥

दृष्टं ज्ञातं दिव्यास्त्राणां पारमन्तो येन स विप्रे विषये शस्त्रग्रहणं

सर्वस्वादाभिज्ञपरश्वधेन विदधे निःक्षत्रिया मेदिनी । यद्बाणव्रणवर्त्मना शिखरिणः क्रौंचस्य हंसच्छलादद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ॥ ४२ ॥

रामः–

स्त्रीषु प्रवीरजननी जननी तवैव
देवी स्वयं भगवती गिरिजापि यस्यै ।
त्वद्दोर्वशीकृतविशाखमुखावलोक–
व्रीडाविदीर्णहृदया स्पृहयांबभूव ॥ ४३ ॥

अपिच–

हारः कण्ठे विशतु यदि वा तीक्ष्णधारः कुठारः स्त्रीणां नेत्राण्यधिवसतु मुखं कज्जलं वा जलं वा । सम्पश्यामो ध्रुवमपि सुखं प्रेतभर्तुर्मुखं वा यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः ॥ ४४ ॥

गुरुर्भारो यस्मिंस्तादृशात्साहसिक्यात् । श्रोत्रियेभ्यः वेदाध्ययनाग्निहोत्रादिकर्मणा श्रेष्ठेभ्यः । सुगमम् ॥ ४१ ॥ ४२ ॥

किंचित्क्षुब्धं ज्ञात्वा पुनस्तौति—स्त्रीष्विति । प्रवीरजननी प्रकृष्टशूरमाता । एवपदेन नान्या । कुत एवं इत्यपेक्षायामाह । यस्यै तव जनन्यै गिरिजा स्पृहयांबभूवेति । अहं चेदृक्पुत्रमाता स्यामिति । स्पृहायां हेतुमाह । त्वद्दोर्वशीति । विशाखः शिखिवाहनः स्कन्दो यदा क्रौञ्चगिरिजयार्थं गतस्तदा परशुना युद्धे पराजित इति ॥ ४३ ॥ ४४ ॥

परशुरामः तथापि ( साभ्यसूयम् )—

यच्चापमीशभुजपीडनपीतसारप्रागप्ग्यभज्यत भवांस्तु निमित्तमात्रम् । राजन्यकप्रधनसाधनमस्मदीयमाकर्ष कार्मुकमिदं गरुडध्वजस्य ॥ ४५ ॥

रामः ( धर्षणामर्षमूर्छितः )—

पुरोजन्मा नाद्यप्रभृति मम रामः स्वयमहं
न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम् ।
अवीरं वीरं वा कलयतु जनो मामयमयं
मया बद्धो दुष्टद्विजदमनदीक्षापरिकरः ॥ ४६ ॥

भूमात्रं कियदेतदर्णवमितं तन्निर्जितं हार्यते
यद्वीरेण भवादृशेन ददता त्रिःसप्तकृत्वो जयम् ।
डिम्भोऽयं नवबाहुरीदृशमिदं घोरं च वीरव्रतं
तत्क्रोधाद्विरम प्रसीद भगवन् जात्यैव पूज्योऽसि नः ॥ ४७ ॥

पूर्वं गरुडध्वजस्य इदानीमस्मदीयं इदं कार्मुकं आकर्ष 'रणो ना प्रधनं युद्धम्' इति धनंजयः ॥ ४५ ॥

आकृष्टे धनुषि मुनिधर्षणा अनाकृष्टे मम पराजय इति धर्षणामर्षौ ताभ्यां मूर्छितः । पुर इति । अद्यप्रभृति रामः परशुरामः मम पुरोजन्मा ब्राह्मणो न । पराजयहेतुत्वात् । स्वयमप्यहं रघुकुलजातानां राज्ञां पुत्रः पौत्रो वा न । ब्राह्मणावमाननहेतुत्वात् । तेषां तदभावात् अतोऽयं भूलोकस्थो जनः अयं कौतुकार्थं आगतोऽपि देवादिगणो मां वीरं कलयतु जानातु अवीरं वा 'न शौर्यं ब्राह्मणे हि मे' इत्युक्तत्वात् । मया दुष्टस्यास्य द्विजदमनदीक्षायां परिकरः कटिस्थवस्त्रग्रन्थिर्बद्धोऽस्ति । 'स्यात्सज्जत्वं परिकरः' इति विश्वः ॥ ४६ ॥

एतन्मनसि विचार्य तत्तुल्यः पुनरपि शान्त्यैव वदति—भूमात्रमिति । प्रकरणार्थः सुबोध एव । कटाक्षमुपाक्षिपति । यदा यत्र विजये लाभत्रयमस्ति तदैश्वर्यग्रहणं, आत्मजयघोषणं, शत्रुहननं चेति तेषां

द्विः शरं नाभिसंधत्ते द्विः स्थापयति नाश्रितान्। द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते ॥ ४८ ॥

( रामनाट्यवर्णनम् )

रामस्तदादाय धनुः सहेलं बाणं गुणे योज्य यदा चकर्ष । भाति स्म साक्षान्मकरध्वजः स्वर्गतिं प्रचिच्छेद च भार्गवस्य ॥ ४९ ॥

तु तत्पराजये किमपि नास्तीत्याह—यत् भूमात्रं न त्वन्ये लोकास्तत्राप्यर्णवमितं न तु सर्वा भूः । तत्रापि भवादृशेन वीरेण त्वादृशेन शूरेण । तत्रापि त्रिःसप्तकृत्वो न त्वेकवारं निर्जितं तत् हार्यते त्वया त्याज्यते, आदाय गृह्यत इति एतत्कियत् ? न कियदिति । तदपि भूमात्रं तव नास्तीति भावः । किंशिष्टेन वीरेण । जित्वा ब्राह्मणेभ्यो ददता । एतेनैश्वर्यग्रहणमपि नास्ति । तर्हि जयो भविष्यति सोऽपि नास्तीत्याह । अयं श्लक्ष्णो जनः नवबाहुस्तरुण इति । त्वं तु डिम्भो वृद्धः । 'डिम्भोऽस्त्री बालवृद्धयोः' इति विश्वः । वीरव्रतं ईदृशं घोरम् 'बालवृद्धौ परित्यक्त्वा सास्त्रं हन्यान्न चक्रकम्' इति राजनीतौ । कीदृशं वीरव्रतम् । अजयं वृद्धजयेऽप्यजयमेवेत्यतो जयोऽपि नास्ति । 'यथा कथंचिदत्युग्रं रिपुं हन्याद्विचक्षणः' इति वाक्याद्वृद्धोऽपि हन्तव्यश्चेत्तत्राह—त्वं नोऽस्माकं जात्यैव ब्राह्मणजात्यैव पूज्योऽसि न क्षात्रेण अतः पूज्ये वधाभावः । तस्मात्त्वं क्रोधाद्विरम, प्रसीद च । आत्मवधेनास्मभ्यमयशो मा देहीत्यभिप्रायः । संकरोऽयमलंकारः ॥ ४७ ॥

इत्युक्तेप्युत्कटमात्मक्षात्रपणसाफल्यं श्रावयति—द्विःशरमिति सुगमम् ॥ ४८ ॥

मकरध्वजः कामरूपः स्वर्गगमनम् । अत्रेयं कथा । रामस्य बाणो निरर्थको न स्यात्, चेन्मुनये त्यजति तर्हि ब्राह्मणवधः स्यात्, भूमौ चेत्तर्हि भूतपीडा स्यात् । एतज्ज्ञात्वा परशुरामस्य स्वर्गगमनमेव चिच्छेदेति भावः ॥ ४९ ॥

तदा सीतानाट्यम्--

तच्चापमाकर्षति ताटकारावाकर्णमाकर्णवि-
शालनेत्रा । सासूयमैक्षिष्ट विदेहजाऽसौ कन्या
किमन्यां परिणेष्यतीति ॥ ५० ॥

भार्गवः सानुनयम्--

यः कार्तवीर्यस्य भुजासहस्रं चिच्छेद वीरो
युधि जामदग्न्यः । स सायके रामकराधि-
रूढे ब्राह्मण्यदैन्यप्रणयी बभूव ॥ ५१ ॥

धावद्धूर्जटिधर्मपुत्रपरशुक्षुण्णाखिलक्षत्रियश्रेणी-
शोणितपिच्छिला वसुमती कोऽस्यामधास्यत्प-
दम् । त्रैलोक्याभयदानदक्षिणभुजावष्टम्भदिव्यो-
दयो देवोऽयं दिनकृत्कुलैकतिलको न प्राभवि-
ष्यद्यदि ॥ ५२ ॥

तदाकर्षणे सीतावृत्तमाह--तच्चापमिति । तच्चापं तस्य मुनेश्चापम् । ताटकारावितिपदेन रामस्य स्त्रीषु निर्दयत्वमारोपितं सीतया । अन्य-स्त्रीपरिणयनेन ताटकावन्ममापि मरणं स्यादिति भावः ॥ ५० ॥

भार्गवः सानुनयम् । पूर्वार्धे मुनिशौर्यकीर्तनेन रामशौर्याधिक्यं द्योतितम् । अनौद्धत्यं तु ब्राह्मणस्वभाव एवेति द्योतितम् । ब्राह्मण्यं ब्राह्मणस्वभावश्चेदं दैन्यं तव प्रणयोऽस्यास्तीति ॥ ५१ ॥

इदानीं मुनिः श्रीरामं स्तौति--धावद्धूर्जटीति । यद्ययं देवो रामः न प्राभविष्यत् नावतरिष्यत् तर्हि अस्यां भूमौ पदं कोऽधास्यत् । कुतो नाधास्यादित्यपेक्षायामाह--धावन्क्षत्रवधार्थं त्वरमाणो यो धूर्जटे रुद्रस्य धर्मपुत्रः शिष्यः तस्य यः परशुस्तेन क्षुण्णा या अखिलक्षत्रिय-श्रेणी क्षत्रियपङ्क्तिः तस्याः शोणितेन पिच्छिला आच्छादिता वसुमती । जातेति शेषः । रुद्रशिष्यत्वेन संहारकत्वं सूचितम् । ' प्रवीणदक्षिणौ विज्ञे ' इति विश्वः । ' उत्तम्भने रवौ विष्टाववष्टम्भाख्रियामथ ' इत्यपि । अत्र सूर्य उत्तम्भनं वा । अन्यत्सुगमम् ॥ ५२ ॥

रामः पश्चाज्जामदग्न्यचरणकमलयोर्निपत्य—

उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरुर्वीर्यं यत्तु नयद्गिरामनुपथं व्यक्तं हि तत्कर्मभिः । त्यागः सप्तसमुद्रमुद्रितमही निर्व्याजदानावधिः सत्यब्रह्मतपोनिधे भगवतः किं किं न लोकोत्तरम् ॥ ९३ ॥

सदयं परशुरामः—

माता का न शिशोर्वचांसि कुरुते दासीजनोक्तानि या कस्तातः प्रमदाप्रतारितमतिर्जानाति कृत्यं न यः । कश्चायं भरतश्रियामविधिना यो राजते दुर्नयो व्याषेधार्थमधिज्यधन्वनि मयि श्रीरामभृत्ये स्थिते ॥ ९४ ॥

उत्पत्तिरिति । सत्यं यथार्थभाषणम्, ब्रह्म वेदः, तपः कायक्लेशः एतानि निधीयन्ते यस्मिन् तत्संबुद्धौ हे सत्यब्रह्मतपोनिधे, भगवतः पूज्यस्य तव लोकोत्तरं लोकेभ्योऽतिरिक्तं किं किं न ? अपितु सर्वमेवास्ति । तदेव द्योतयाति—जन्मगुरुवीर्यत्यागैस्त्वादृशः कोऽपि नास्तीति ध्वनितम् । अन्यत्सुगमम् ॥ ९३ ॥

परशुरामः सदयम् । प्रमदया स्त्रिया प्रतारिता प्रलोभिता वञ्चिता मतिर्यस्य । भरतानां भरतवंश्यानां राज्ञां श्रियम् । भारतश्रियमिति वक्तव्ये वृद्ध्यभाव आर्षः । भरतस्य दौष्यन्तेः श्रियं वा । अविधिना धर्मयुद्धविद्याभावेन यो दुर्नयोऽन्यायो राजते तस्य व्याषेधार्थं श्रीरामस्य तव भृत्ये मयि परशुरामे स्थिते सति स कः ? न कोऽपीत्यर्थः । कीदृशे अधिज्यं धनुर्यस्य तस्मिन्निति । अयं क्षेपकश्लोकः टीकान्तरात् ॥ ९४ ॥

ज्ञात्वावतारं रघुनन्दनस्य स्वकीयमालिङ्ग्य
ततोऽवगाढम् । विन्यस्य तस्मिञ्जमदग्निसूनु-
स्तेजो महत्क्षत्रवधान्निवृत्तः ॥ ५५ ॥

रामविवाहवर्णनम् ।

निःसाणमर्दलरसालगभीरभेरी
झङ्कारतालरवकाहलनादजालैः ॥
पूर्णं बभूव धरणीगगनान्तरालं
पाणिग्रहे रघुपतेर्जनकात्मजायाः ॥ ५६ ॥

रामे श्यामे सकामे स्पृशति जनकजापाणि-
पद्मं प्रदत्तं पित्रा नेत्रालिपद्मे प्रवरपुरवधूम-
ण्डलानां मुहूर्ते । तत्पाणिस्पर्शसौख्यं परमनु-
भवती सच्चिदानन्दरूपं तत्रासीद्बाणभिन्ना
रमणरतिपतेर्योगनिद्रां गतेव ॥ ५७ ॥

वैवाहिकं कुशिकनन्दनजामदग्न्य-
वाल्मीकिगौतमवसिष्ठपुरोहिताद्यैः ।

महत्तेज ऐश्वरं, क्षात्रं वा । अन्यत्सुगमम् ॥ ५५ ॥

निःसाणेति । 'रसालगोमुखावस्त्री काहलः संकरध्वनौ' इति विश्वः । निःसाणो वाहिनीवाद्यविशेषः ॥ ५६ ॥

रामे इति । प्रवराः देवाः प्रकृष्टो वरो येभ्यस्ते तत्पूर्वं स्वर्गस्त्री-समूहानामिति नेत्रश्रेणीपद्मानि यस्मिंस्तादृशे मुहूर्ते । रमयतीति रमणः स चासौ रतिपतिश्च तद्बाणभिन्ना सती योगनिद्रां गता इवासीत् । एतेन दिग्धप्रलयसात्त्विको दर्शितः । उक्तं च रसोदधौ—'सुख-दुःखाभ्यां चेष्टाज्ञानविलपनं यदा तदा प्रलय इति' किंविशिष्टं तत्पाणिस्पर्शसौख्यम् । सच्चिदानन्दरूपं मोक्षसुखान्तरगमिति ॥ ५७ ॥

वैवाहिकमिति । सलक्ष्मणो राम एतैः कुशिकनन्दनादिभिः कृत्वा वैवाहिकं विधिं समाप्य तैः कुशिकनन्दनादिभिः सह स्वपुरीं जगा-

रामो विधिं सह समाप्य सलक्ष्मणस्तै-
रानन्दयञ्जनकजां स्वपुरं जगाम ॥ ५८ ॥

इति हनुमन्नाटके प्रथमोऽङ्कः ॥ १ ॥

इति हनुमन्नाटके प्रथमोऽङ्कः ।

## द्वितीयोऽङ्कः ।

प्राप्यायोध्यां स्वजनपरमोत्साहसंभावनाभि-
र्नत्वा मूर्ध्नाऽखिलगुरुजनं सीतया लक्ष्मणेन ॥
रामो यामत्रयमपि कथं मारनाराचभिन्नो
नीत्वा सीतां किमिति कुरगांस्ताडयामासदण्डैः १॥

सर्वलक्षणोपेतान्देवभूपालयोग्यान्मेदुरमन्दु-
रायां तुरगानवलोक्य मारज्वराकुलितचि-
त्तभ्रान्त्या वधूपुत्रयोर्मङ्गलावलोकनायाग-
तस्य भगवतस्तरणेः किरणमालिनस्तुरगा
इमे स्वभावतेजस्विनस्तत्ताडनमसोढारस्ता-
डिताः पुनःपुनर्भगवन्तं भास्करं द्रुतगत्या-
स्ताचलं नयन्त्विति बुध्वा दाशरथिर्जनक-

मेत्यन्वयः । सलक्ष्मण इति पदेन सीतानुजयोर्मिलया लक्ष्मणस्यापि
विवाहो द्योतित इति ध्वनितम् ॥ ५८ ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायां
जानकीस्वयंवरो नाम प्रथमोऽङ्कः ॥ १ ॥

अथ तयोस्तत्र संभोगमधुरं द्योतयितुं पद्यमवतारयति—प्राप्येति ।
प्रथमयामस्तु प्रवेशकौतुकेन नीतस्तदग्रे यामत्रयं कथमपि नीत्वा ।
कथमप्यत्र हेतुमाह—मारनाराचभिन्न इति । अन्यत्सुगमम् । किमित्ये-
तस्यार्थं कविरेव द्योतयति तत्र नास्मद्दोषः ॥ १ ॥

सर्वेति । 'मेदुरं स्निग्धचित्रयोः' इति धरणिः । बलात्सीता

पुत्री च दण्डाघातैस्तुरगांस्ताडयामास ।
निशायां प्रौढायां शीघ्रमावयोः संगमो भव-
त्वित्यभिप्रायः ॥

अस्तं याते मुकुलनलिनीबान्धवे सिन्धुपुत्रे
प्राचीभागे प्रमदमुदिते पक्वनारिङ्गपिङ्गे ।
रामं कामं गुरुजनगिरा मन्दिरं सुन्दरं स्वं
रम्भोरुस्तं जनकतनया नन्दयन्ती जगाम ॥ २ ॥
प्राचीभागे सरागे तरणिविरहिणि क्रान्तमुद्रे
समुद्रे निद्रालौ नीरजालौ विकसितकुमुदे निर्वि-
कारे चकोरे । आकाशे सावकाशे तमसि शम-
मिते कोकलोके सशोके कंदर्पेऽनल्पदर्पे वितरति
किरणान् शर्वरीसार्वभौमः ॥ ३ ॥

मेदुरे चित्रे तुरगांस्ताडयामास । रामस्तु मन्दुरायां 'वाजिशाला तु मन्दुरा' इत्यमरः । मेदुरं च मन्दुरा चेति द्वन्द्वैक्यम् । एतेनो-न्मादावस्था द्योतिता । सोक्ता रसोदधौ–'प्रौढानन्दायत्तो विरहा-द्यस्तद्भ्रम उन्मादः' इति ॥

अथ तयो रतिगृहप्रवेशमाह–अस्तमिति । मुकुलिताया नलिन्याः बान्धवे विकासहेतौ सूर्येऽस्तं याते सति प्राचीभागे पूर्वदिग्भागे प्रमदं यथा स्यात्तथा सिन्धुपुत्रे चन्द्रे उदिते सति, रामं नन्दयन्ती जगाम। कामं सस्पृहम् । 'अकामानुमतौ कामः स्पृहायामपि संमतः' इति धरणिः । एतेन त्रपा द्योतिता । सुन्दरं रामं मन्दिरं वा । उक्तं च कलाविलासे–'रम्यपक्षिरवानन्दं नवचित्रकुलाकुलम् । स्रक्ताम्बूलार्ह-शयनं गृहं सुरतसुन्दरम्' इति ॥ २ ॥

पुनरपि सिंहावलोकनन्यायेन चन्द्रोदयमाविष्करोति–प्राची-भागे इति । तरणिविरहिण्यपि प्राचीभागे सरागे सति । एतेन चन्द्रदर्शनात्सत्योऽपि स्त्रियः परपुरुषानुरागं कुर्वन्तीति ध्वनि-

भविष्ये रामशापेऽत्यन्तनिकटवर्तिनि कोक-
लोकानामकस्मान्महोत्पातनिमित्तं पार्श्वस्थि-
तानामपि प्रियाणामनवलोकतः शोकसंभवः॥)
स्वैरं कैरवकोरकान्विदलयन्यूनां मनः खेदय-
न्नम्भोजानि निमीलयन्मृगदृशां मानं समुन्मूल-
यन् । ज्योत्स्नां कन्दलयंस्तमः कवलयन्नम्भो
धिमुद्वेलयन्कोकानाकुलयन्दिशो धवलयन्निन्दुः
समुज्जृम्भते ॥ ४ ॥
अद्यापि स्तनतुङ्गशैलशिखरे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवा-
लोहितः । उद्यद्दूरतरप्रसारितकरः कर्षत्यसौ

तम् । यतः पूर्वाया दिशस्तरणिरतिप्रियस्तथापि सरागा जातो
भावः । 'यत्रोदेति रविः सैव प्रिया तस्याश्च स प्रियः' इत्यागमोक्त
त्वात् । सावकाश इति गृहादिदर्शनमेव तत्रावकाशः । तमसि शमं ना
गते सति, कोकाश्चक्रवाकास्तेषां लोके संमूहे शर्वरीसार्वभौम इति
शर्वरीभूपतिश्चन्द्र इति ॥ ३ ॥

ननु कोकानां कुतः शोक इत्यपेक्षायामाह—भविष्ये इति गद्यम
पुनश्चन्द्रमेव विशिनष्टि—स्वैरमित्यादिचतुर्भिः । युवत्यश्च युवान
यूनस्तेषां यूनाम् । अत्रैकशेषः 'पुमान् स्त्रिया' इत्यनेन । 'स्त्रिया सह
क्तौ पुमान् शिष्यते' इति तदर्थः । कन्द एव कन्दलः । स्वार्थे लच्
समूहं कुर्वन्नित्यर्थः । अन्यत्सुगमम् ॥ ४ ॥

तत्रोदये सरागं चन्द्रमवलोक्य कविरुत्प्रेक्षते—अद्यापीति । अ
शशी तत्क्षणादेव तदुदयमात्रादेव फुल्लन्तो ये कैरवास्त एव कोश
खड्गकोशास्तेभ्यो निःसरन्ती या अलिश्रेणी भ्रमरपङ्क्तिः सैव कृपा
खड्गस्तमाकर्षति प्रसह्य गृह्णाति । दिवा तत्र सुप्ता अलयश्चन्द्रोदयादे
सर्वे पङ्क्तीभूय एकदैव निःसरन्तीति प्रसिद्धम् । कीदृशः । उद्यद्दू
च्छन् इति । क्रोधादालोहितः इव । इति किम् । एष मानः सीम

तत्क्षणात्फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥ ५ ॥

यातस्यास्तमनन्तरं दिनकृतो वेषेण रागान्वितः स्वैरं शीतकरः करं कमलिनीमालिङ्गितुं योजयन्। शीतस्पर्शमवाप्य संप्रति तया युक्ते मुखाम्भोरुहे हास्येनैव कुमुद्वतीवनितया वैलक्ष्यपाण्डूकृतः ॥ ६ ॥
कर्पूरैः किमपूरि किं मलयजैरालेपि किं पारदै-रक्षालि स्फटिकान्तरैः किमघटि द्यावापृथिव्यो-र्वपुः । एतत्तर्कय कैरवक्लमहरे शृङ्गारदीक्षागुरौ दिक्कान्तामुकुरे चकोरसुहृदि प्रौढे तुषारत्विषि ॥७॥

न्तिनीनां हृद्यद्यापि मय्युद्यते सति स्थातुं वाञ्छतीति । कीदृशे हृदि स्तनावेव तुङ्गे शैलशिखरे यत्र ॥ ५ ॥

रागमुत्प्रेक्ष्य पाण्डुतामुत्प्रेक्षते--यातस्येति । अनन्तरं पक्षान्तरे शीतकरोऽस्तं यातस्य दिनकृतः सूर्यस्य वेषेण रागान्वितो जातः। यादृगरुणो रविरस्ति तादृगुदये चन्द्रोऽभूदिति भावः । किं कुर्वन् । स्वैरं यथेष्टं कमलिनीं सूर्यप्रियामालिङ्गितुं करं किरणरूपं हस्तं योजयन् सन् । संप्रति तदैव तया कमलिन्या शीतस्पर्शमवाप्य मुखाम्भोरुहे स्वकीयमुखारविन्दे युक्ते मुद्रिते सति । 'रुद्धे' इत्यपि पाठः । कुमुद्वतीवनितया कुमुदिन्य एव चन्द्रकान्ता तया कृतं यद्वैलक्ष्यं लज्जातिरेकस्तेन पाण्डूकृतः रागान्वितोऽपि पीतत्वमागत इति केनैव हास्येनैव परगामिनमेवं दृष्ट्वा यत्कुमुदिनीविकसनं तदेव हासः । उक्तं च--'आत्मनश्चरिते यस्य ज्ञातेऽन्यैर्यत्र जायते । अपत्रपेति महती तद्वैलक्ष्यमुदाहृतम्' इति ॥ ६ ॥

रामः सखीं प्रति--कर्पूरैरिति । 'द्यावाभूमी च रोदसी' इत्यमरः । अक्षालि प्रक्षालितं किम् । दिक्पूर्वा सैव कान्ता तस्या मुकुरे तत्तुल्ये । अन्यत्स्पष्टम् ॥ ७ ॥

अमृतममृतरश्मेर्मण्डलस्यानुभूय
द्विजचतुरचकोरप्रीतिरङ्गारकेषु ।
प्रभवति भवदीया चेद्विधातुर्विधानं
तदिह पुनरपि स्यात्कोऽन्यथा कर्तुमीशः ॥ ८ ॥

चक्रक्रीडाकृतान्तास्तिमिरचयचमूस्फारसंहारचक्रं कान्तासंहारसाक्षी गगनसरसि यो राजते राजहंसः । संभोगारम्भकुम्भः कुमुदवनवधूबोधनिद्रादरिद्रो देवः क्षीरोदजन्मा जयतिरतिपतेर्बाणनिर्वाणशाणः ॥ ९ ॥

इत्याकर्ण्य चन्द्रमण्डलशाणोत्तीर्णो रतिपतेर्बाणो जानकीरामचन्द्रयोर्वक्षःस्थले निपतति

अङ्गारकोरकाशनं चकोरमवलोक्याह–अमृतमिति । भो द्विज चतुरपक्षिविदग्धचकोर, अमृतरश्मेर्मण्डलस्य चन्द्रविम्बस्यामृतमनुभूय चेद्भवदीया प्रीतिः अङ्गारकेषु प्रभवति तत्तदा विधातुरीश्वरस्य विधा पुनरप्यन्यथा कर्तुं कः पुमान् ईशः स्यात् ? न कोऽपीति भावः ॥ ८ ॥

अथ पञ्जरस्था मन्दिरसारिका सखीनां स्वमन्दिरगमनायाशि पठति–चक्रेति । क्षीरसमुद्राज्जन्म प्रादुर्भावो यस्य एवंभूतो देवश्चन्द्र जयति । तमेव विशिनष्टि–अन्धकारनिचयसेनायाः स्फारो विस्तार स्तन्नाशाय चक्रम् । आविष्टलिङ्गत्वादखण्डत्वं राजहंस इव । लोपे प्यच् औणादिकः । कुमुदवनवधूनां बोधे विकासे सति निद्राय दरिद्रो यस्माद्यदुदये विकसितत्वात्पुनर्न संकोच इति भावः । रति पतेर्बाणानां निर्वाणस्तीक्ष्णीकरणं तस्य शाण उपलविशेषः यद्वा निर्वाणं मोक्षस्तस्य शाणः सहायकृत् । कामबाणनिर्मुक्तौ सत्यां सहायकृदिति भावः । ' निर्वाणस्तीक्ष्णमोक्षयोः ' इति चरकः । ' उत्तेजकोपले शाणः पक्षेप्यात्मगते पुमान् ' इति धरणिः ॥ ९ ॥

इति श्लोकाभिप्रायमवगम्य निष्क्रान्तः सर्व आलिजनः । अत्रापि तरुणरात्रौ शुकसारिकादीनां पक्षिणां मधुरस्वरैर्मदनोर्मी संसूचिता ॥

(रामस्य —

अङ्के कृत्वा जनकतनयां द्वारकोटेस्तलान्तात्
पर्यङ्काङ्के विपुलपुलकां राघवो नम्रवक्राम् ।
बाणान्पञ्च प्रवदति जनः पञ्चबाणोऽप्रमाणै
र्बाणैः किं मां प्रहरति शनैर्व्याहरन्ती जगाम ॥१०॥

गाढंगाढं कमलमुकुलं पुण्डरीकाक्षवक्षःपीठं
काठिन्यमपि कुचयोर्जानकी मानकीर्णा ।
पूर्णा कामैः शिथिलमनिलस्यागमायाचकार
स्फीतं नीतं सदयहृदयं स्वामिनालिङ्ग्यमत्वा ॥११॥

अथ जानकीरामयोः शृंगारं वर्णयति—अङ्के कृत्वेति । द्वारकोटेर्द्वाराग्रभागस्य तलान्ताज्जनकतनयां अङ्के कृत्वा पर्यङ्काङ्के पर्यङ्कमध्ये निनायानयत । विपुलपुलकाम् । एतेन मुखस्मितस्निग्धसात्त्विको दर्शितः । उक्तं च रसोदधौ—'साक्षादीश्वरयोगो यैस्ते मुख्या मनीषिभिर्ज्ञेयाः। इति द्रढिमरतिप्रकारा ये स्युः स्निग्धा मतास्त एवात्र ' इत्यपि । शनैर्मनसि उवाच बालायाः प्रभूतरोमाञ्चदर्शनेन पञ्चबाणेप्यपरिमितबाणभ्रान्तिः ॥ १० ॥

गाढंगाढमिति । मानकीर्णा मामा स्पृशेत्यादिव्याजवचनभाषिणी सीता सदयहृदयं चानिलस्वागताय वायोरागमनाय आ ईषत् शिथिलं चकार । किं कृत्वा । पुण्डरीकाक्षो रामस्तद्वक्षःपीठं कमलमुकुलं तत्सदृशकोमलं कुचयोरपि काठिन्यं मत्वा। कीदृशी । कामैः कामसंबन्धिभावैः पूर्णा । कामकलाविदग्धा इत्यर्थः । स्वामिना श्रीरामेणापि गाढंगाढं यथा स्यात्तथा आलिङ्ग्य स्फीतं नीतं स्फीताख्यं चुम्बनं प्रा-

जानकीरामचन्द्रयोः—
अन्योन्यं बाहुपाशग्रहणरसभराशीलिनोस्तत्रयू-
नोर्भूयोभूयः प्रभूताभिमतफलभुजोर्नन्दतोर्जात
एषः ॥ संसारो गर्भसारो नव इव मधुराला
पिनोः कामिनोर्मा गाढं चालिङ्ग्य गाढं स्वपिहि
नहि नहीति च्युतो बाहुबन्धः ॥ १२ ॥
वक्त्रे ततः फणिलतादलवीटिकां स्वे
विन्यस्य चन्दनघनावृतपूगगर्भाम् ॥

ऽपितम् । तदुक्तं कामावतारे—'नकारबहुलक्षिप्तहस्तान्तं वञ्चिताध-रम् । रभसा गण्डसंस्पर्शे स्फीतं तच्चुम्बनं मतम् ' इति । कमल-कलिकाकोमलं पुण्डरीकाक्षवक्षः कुचकाठिन्येन व्यथितं मा भूदिति शङ्कया बाहुपाशमीषद्विसृज्य पवनप्रवेशाय हृदयं शिथिलमाचका-रेति भावः ॥ ११ ॥

अन्योन्यमिति । तत्र संभोगसमये भूयोभूयो नन्दतोर्मुहुर्मु-हुर्वर्धमानयोर्यूनोर्जानकीरामचन्द्रयोरेष संसारो नव इव जातः । अज्ञानरसप्रदो जात इति भावः । गर्भे सारः सुखं यस्य सः । कीदृ-शयोः । परस्परं बाहुपाशग्रहणयो रसभरो रसातिरेकस्तमभिव्याप्य शीलितुं शीलं ययोस्तौ तथा । पुनः कीदृशयोः । प्रभूतं बहु अभिम-तमिष्टफलं कामफलं भुञ्जतोः । यथेच्छानेककलाविदग्धयोरिति पुनर-ध्याहारः । कामिनोः कामरसवर्धनविदग्धयोरिति । बाहुबन्ध-श्च्युतः शिथिलो जातः । इति किम् । रामेणोक्तं मा इति मां गाढमा-लिङ्ग्य स्वपिहि । सीतयोक्तं नहि नहीति । अत एव मधुरालापिनोः स्वपिहि नहि नहीत्यादिमाधुर्यम् । श्यामं कामसमाकृतिं राममालिङ्ग्य उत्कण्ठितापि कामाकुलापि जानकी कुलसंभूतिलज्जया; नवसंगम-तया च भर्तृमनोहरणार्थं च नहि नहीति व्याहृत्य दुःसहमपि मारज्वरं सहते स्म ॥ १२ ॥

वक्त्रे इति । चन्दनं खदिरं घनः कर्पूरः ताभ्यामावृतः पूगः क्रमुको

रामोऽब्रवीदयि गृहाण मुखेन बाले
तच्छद्मना तदधरं मधुरं प्रमातुम् ॥ १३ ॥
मन्दंमन्दं जनकतनया तां चतुर्धा विधाय
स्वैरं जह्रे तदधरमधु प्रेमतो मीलिताक्षी ।
मेने तस्यास्तदनुकवलान्धर्मकामार्थमोक्षान्
रामः कामं मधुरमधरं ब्रह्म पीत्वापि तस्याः॥१४॥
भाति स्म चित्तास्थितरामचन्द्रं सा रुन्धती निर्गमशङ्कयेव ॥ स्तनोपरि स्थापितपाणिपद्मा संजाततनिद्रा सरसीरुहाक्षी ॥ १५ ॥

रामः—

( तत्र मैथिलसुतोरस्थलनिक्षिप्तयक्षकर्दमे सानन्दपतितभ्रमरमालोक्य )

गर्भं यस्यास्ताम् । 'चूर्णं कस्तूरिकागर्भं खदिरं चन्दनं मतम्' इति धरणिः ॥ १३ ॥

ततः किं जातमित्यपेक्षायामाह—मन्दंमन्दमिति । जनकतनया वीटिकां चतुर्धा विधाय तत्रापि मन्दंमन्दं शनैःशनैः तत्रापि स्वैरं स्वमुखानुसारं यथा तथा जह्रे हृतवती । चतुर्धात्वे हेतुः । कुतः तस्य रामस्य यदधरमधु तस्मिन्यत्प्रेम तस्मादेकदैव ग्रहणे तदधरायोगः स्यादिति भावः । मन्दमन्दत्वे हेतुः । कीदृशी मीलिताक्षी तदधरस्पर्शानन्दान्नेत्रमीलने सति तद्धरणायोगान्मन्दत्वम् । तदनु ग्रहणानन्तरं तस्या वीटिकायाश्चतुरः कवलान्धर्मार्थकाममोक्षांस्तत्प्राप्तिसमान्मेने । रामोऽपि तस्याः सीताया मधुरमधरं पीत्वा तमेवाधरं ब्रह्म मेने ब्रह्मानन्दसमं मेने । एतदधिकं ब्रह्मसुखं नास्तीति भावः ॥१४॥

भातीति । छद्मना मिषेण स्वीकृतनिद्रा भाति स्म । स्तनयोरुपरि स्थापितं पाणिपद्मं यया सा । उत्प्रेक्षते—किं कुर्वतीव । चित्तस्थितश्चासौ रामचन्द्रश्च तं निर्गमशङ्कया । हृदयान्मा निर्गच्छात्विति भयेन रुन्धतीव ॥ १५ ॥

मदनदहनशुष्यत्कान्तकान्ताकुचान्त-
हृदि मलयजपङ्के गाढबद्धाखिलाङ्घ्रिः ॥
उपरि विततपक्षो लक्ष्यतेऽलिर्निमग्नः
शर इव कुसुमेषोरेष पुङ्खावशेषः ॥ १६ ॥

तत्रावसरे–

पृथुलजघनभारं मन्दमान्दोलयन्ती मृदुचलदलकाग्रा प्रस्फुरत्कर्णपूरा । प्रकटितभुजमूलादर्शितस्तन्यलीला प्रमदयति पतिं द्राग्जानकी व्याजनिद्रा ॥ १७

तामपि दूरस्थां मन्वानः–

तदनु जनकपुत्रीवक्त्रमालोक्य रामः पुनरपि पुनरेवाघ्राय चुम्बन्न तृप्तः । स्तनतटभुजमूलोरःस्थलं रोमराजि मदनसदनमासीच्चुम्बितं पञ्चबाणः ॥ १८

मदनेति । कामाग्निना शुष्यद्यो रमणीयः रामस्य सीता कुचान्तः स्तनमध्यदेशस्तद्युक्ते हृदि यो मलयजपङ्कस्तस्मिन्निमग्नो लिर्भ्रमरो लक्ष्यते । उत्प्रेक्षते—कीदृशः । गाढं यथा स्यात्तथा ब अखिला अङ्घ्रयो यस्य अत एव उपरि विततौ पक्षौ यस्य उड्डीना भवात् । क इव लक्ष्यते । एष कुसुमेषोः शर इव पुङ्खमात्रावशिष्टः अन्यत् हृदयमग्न इति ॥ १६ ॥

द्राक् ईषद्व्याजेन भावाविष्करणदम्भेनाश्रिता निद्रा यया सा अन्यथा वैजात्यमायाति । जानकी पतिं प्रमदयति प्रकृष्टं हर्षयति हर्षप्रकारमेवाह–मन्दं यथा स्यात्तथा पृथुलं मांसलं जघनं तस्य यो भा तं दोलयंती तोलयन्ती । पुनः कीदृशी । मृदूनि स्पर्शार्हाणि चञ्चलान लकाग्राणि यस्याः, प्रकटितं भुजमूलं यया, दर्शिता स्तन्यलीला स्तन परिसरशोभा यया । एतत्पद्येन कुञ्चिताख्यं शयनं दर्शितम् तदुक्तं कामावतारे–'प्रमीलादम्भतो यत्र प्रीतिदानदिदित्सया । स्वशो दीयते नेत्रे शयनं तद्विकुञ्चितम् ' इति ॥ १७ ॥

तदनु व्याजाविष्कृतभावदर्शनानन्तरं रामः जनकपुत्रीव

श्रीरामपादाः—

निद्रालुस्त्रीनितम्बाम्बरहरणरणन्मेखलारा-
वधावत्कंदर्पारब्धबाणव्यतिकरतरलाः का-
मिनो यामिनीषु । ताटङ्कोपान्तकान्तग्रथि-
तमणिगणोद्गच्छदच्छप्रभाभिर्व्यक्ताङ्गास्तु-
ङ्गकम्पाजघनगिरिदरीमाश्रयन्ते श्रयन्ते ॥ १९ ॥

मालोक्य पुनःपुनराघ्राय चुम्बन्नपि तृप्तो न जातः । स्तनतटभुजमू-लोरःस्थलं रोमराजि मदनसदनं चापि रामेण चुम्बितमासीदिति । अत्र द्वन्द्वैक्यम् । कीदृशः पञ्चबाणः । कामोऽस्यास्तीति तथा सकाम इति । अर्शआदिभ्योऽच् । एतेन पञ्चशराख्यं चुम्बनं द्योतितम् । तदुक्तं वात्स्यायनीये—'भुजमूलं स्तनौ वक्षो वलिं मदनसद्म च । पद्मिनी चुम्बिता द्रावं याति पञ्चशराभिधम्' इति ॥ १८ ॥

अथ भयलोलालिङ्गनं द्योतयितुं पद्यमवतारयति—निद्रेति । ते प्रसिद्धाः सकामाः श्रीरामपादा जघनमेव गिरिदरी सैवाश्रयं निलयस्थानं श्रयन्ते इति । कुत इत्यपेक्षायामाह— निद्रा जाता यस्या एवंभूता स्त्री सीता तस्या नितम्बवस्त्राकर्षणे सति रणन्ती शब्दिता या मेखला तस्या रावेण धावन्यः कंदर्पस्तेनारब्धः संधितो यो बाणस्तेन यो व्यतिकरो भयं तेन तरला आत्मानं गोपायितुं चञ्चला । अन्योऽपि चौर्यं कुर्वन्केनापि ज्ञात अलं पलायितुमात्मानं गोपायति तथात्राऽपि कामचौर्यम् । अन्यस्मिन्नन्यावभासो व्यतिकरः । अत्र निर्भयत्वेन भयं तर्हि निलीय तिष्ठन्तु इति चेत्तत्राह । ताटङ्कयोरुपान्तेषु ग्रथिता ये मणिगणा रत्नसमूहास्तेभ्य उद्गच्छन्त्यो या उज्ज्वलाः प्रभा दीप्तयस्ताभिर्व्यक्ताङ्गाः प्रकटीकृतशरीरा अत एव ज्ञातेषु सत्सु तुङ्गः कम्पो येषां ते एवंभूताः सन्तः आश्रयन्ते । उक्तं च कामावतारे—'नि-र्निद्रिता मृगदृशो रसनां यदैव संमोचनाय विभयीकृतमानसोलम् । तद्भावकम्पमुखतो जघने निलीयमास्थाय तिष्ठति तदा भयलोलमुक्तम्' इति ॥ १९ ॥

जानकी प्रबुद्धा-

स्पृहयति च बिभेति प्रेमतो बालभावा-
न्मिलति सुरतसङ्गेऽप्यङ्गमाकुञ्चयन्ती ।
अहह नहि नहीति व्याजमप्यालपन्ती
स्मितमधुरकटाक्षैर्भावमाविष्करोति ॥ २० ॥

निधुवनघनकेलिग्लानिभावं भजन्त्या
रमणरभसशङ्कातङ्कि चेतः प्रियायाः ।
अधरदशनसर्पत्सीत्कृतायाः धृतायाः
पिब पिब रसनां मे कामतो निर्विशङ्कम् ॥ २१

स्पृहयतीति । भावं मानसं रागम् । अन्यत्स्पष्टमेव । प्रेमतः स्
स्पृहयति बालभावाद्बिभेतीति योज्यम् ॥ २० ॥

अत्यन्तं कामबाणभिन्ना सती वीतलज्जा जानकी—निधु
नेति । हे रमण, स्वसुखानुसारं निर्विशङ्कं यथा स्यात्तथा मे रस
पिब पिब । आदरे वीप्सा । अत्रास्वादनमेव पानम् । ननु रमि
यास्यामीति चेत्तत्राह—प्रियाया मम चेतो रभसशङ्कातङ्कि रभसो र
धिक्यं ततो या शङ्का भयं तेनातङ्कः कम्पो यस्मिंस्तत् एवं
जातम् । रमणायाक्षमास्मीति भावः । यद्वा सर्वमेकं पदम् । रमण
तव यो रभसो रताधिक्यं तस्माद्या शङ्का तया य आत
स्तद्युक्तं चेतः तदेव प्रियं यस्याः मे । कुतो न क्षमासी
पेक्षायामाह—निधुवने रतौ घना वह्वी या केलिस्तया द्रावणादि
ग्लानिभावं निःप्राणतां भजन्त्याः । उक्तंच रसोदधौ-
'अन्तश्चन्द्रं देहे यत्र वलं पुष्टिकृद्द्रवेदस्याः । तद्विगमा इत
धिक्यश्रमनिःप्राणता ग्लानिः' । पुनः कीदृश्याः । अधरस्य दशनं खण्
तेन सर्पन्निर्गच्छत्सीत्कृतं सीत्काररवो यस्याः । यद्वा अधरदशनयो
धरदन्तयोरेव सर्पत्सीत्कृतं यस्याः । उक्तं च पञ्चसायके—'द्रवति
यदि नारी प्रौढरागाग्नियुक्ता मृदुनिधुवनयोगे दन्तसन्धौ गभीरम्
द्रवति रदनवासः किंचिदुन्मथ्य भूयः कथितमिह मुनीन्द्रैः सीत

**रामः सानन्दं जानकीवाग्विलासमुल्लासयति लालित्यशालिनाऽऽलापेन—**

**वाचां गुम्फेन रम्भाकरकमलदलोदारसंचारचञ्च-**
**त्तन्त्रीसंजातमञ्जुस्वरसरसतरोद्गारताराक्षरेण ।**
**प्रत्यग्रोन्निद्रनाकद्रुमकुसुमनवामोदसंवादमैत्रीपा-**
**त्रीभूतेन धात्रीं सुरभयति चरस्थावरां रामराज्ञी २२**

**अथ रामस्तामाह्लादयति—**

**अरण्यं सारङ्गैर्गिरिकुहरगर्भाश्च हरिभि—**

रागकारि' इति । अस्मिन्पद्ये सीत्कृतमाविष्कृतम् । पुनः धृतायाः अङ्के । वश्यप्रेष्ठेयं नायिका । तदुक्तं रसोदधौ—' सीत्कृतसंज्ञाभिमुखो यस्याः सततं प्रियो भवेदनुगः । वश्यप्रेष्ठा सोक्ता व्रजरमणीमण्डनं यथा राधा ' इति ॥ २१ ॥

वाचामिति । रामराज्ञी चरस्थावरां स्थास्नुचरिष्णुरूपां धरित्रीं सुरभयति सुरभीकरोति । केन । वाचां गुम्फेन रचनया । ' संदर्भो रचना गुम्फः ' इत्यमरः । कीदृशेन गुम्फेन । रम्भाया अप्सरसः करावेव कमले तयोर्यानि दलान्यङ्गुलयस्तासां य उदारः संप्रमादवान् संचारस्तद्रागव्यञ्जकं तन्त्रीगमनं तेन चञ्चन्ती सशब्दा या तन्त्री वीणा ततः संजातो यो मञ्जुस्वरः कोमलालापस्ततोऽपि सरसतरोऽतिशयेन रसवान्य उद्गारः उद्गाराख्यं गीतं तस्मिन् ताराणि व्यक्तान्यक्षराणि यस्मिंस्तत् । तदुक्तं संगीते—'सात्वती पञ्चमश्रीकप्रीतिमण्ठविराजितम् । त्रिपदं सध्रुवं गीतमुद्गाराख्यं मतं बुधैः ' इति । पुनः प्रत्यग्रं नवीनमुन्निद्रं विकसितं च तन्नाकद्रुमकुसुमं पारिजातपुष्पं तस्य यो नवामोदस्तात्कालिको गन्धः स एव या संवादमैत्री वचनचातुरी तस्याः पात्रीभूतेन । पारिजातकुसुमादप्यतिसुगन्धेनेत्यर्थः ॥ २२ ॥

अरण्यमिति । सारङ्गैर्मृगैर्हरिभिः सिंहैः, मातङ्गैः गजैः, पङ्क-

दिशो दिङ्मातङ्गैः श्रितमपि वनं पङ्कजवनैः।
प्रियाचक्षुर्मध्यस्तनवदनसौन्दर्यविजितैः
सतां माने म्लाने मरणमथवा दूरसरणम् ॥२३॥
वक्त्रं वनान्ते सरसीरुहाणि
भृङ्गाक्षमालां जगृहुर्जपाय।
एणीदृशस्तेऽप्यवलोक्य वेणी-
भङ्गं भुजङ्गाधिपतिर्जुगोप ॥ २४ ॥
स्वर्णं सुवर्णं दहने स्वदेहं

जवनैः पद्मव्रातैः, वनं जलं 'जीवनं भुवनं वनम्' इत्यमरः । की दृशैः सर्वैः । प्रियायास्तव चक्षुःसौन्दर्येण मृगाः, मध्यप्रदेशसौन्दर्येण कमलवनं च विजितमिति मृगादिभिररण्यादिश्रयणं युक्तमित्याह— सतां संभावितानां माने चित्तोन्नतौ म्लाने सति केनापि दूषिते सति मरणं मुख्यं तदभावे दूरसरणं देशान्तरदुर्गाश्रयणं योग्यम्। अत एभिर्दुर्गमेवाश्रितमिति भावः। अयि प्रिये, अयीति कोमलामन्त्रणे। अपि वा तत्र संभावना। 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः ॥ २३ ॥

वक्त्रमिति । सरसीरुहाणि पद्मानि एणीदृशस्ते वक्त्रं विलोक्य, तत्सौन्दर्यार्थं वनान्ते जलमध्ये जपायेष्टाराधनाय भृङ्गश्रेण्येवाक्षमाला तां जगृहुः। एणीदृश इति पदेन मृग्योऽपि वनान्ते अरण्ये मध्ये तृणादिभक्षणादिना नेत्रशोभाप्राप्त्यर्थं तपस्यन्तीत्यर्थः । भुजङ्गाधिपतिरपि ते वेणीमवलोक्य तत्सादृश्यहीनमङ्गं जुगोप। अन्यथा स्वशरीरगोपनेन को लाभ इति। यद्वा एणीदृशः इति पदद्वयं, एणी मृगी। जात्येकवचनम्। ते दृशः दृष्टीः अवलोकनवैदग्ध्यानेकत्वाद्बहुवचनम्। अवलोक्य, वनान्ते अरण्यदुर्गे नेत्ररूपं अङ्गं जुगोप। त्वन्नेत्रसादृश्यभाववैलक्षण्यत्वात् ॥ २४ ॥

स्वर्णमिति। सुष्ठु वर्णो यस्य एवंभूतमपि स्वर्णं सुवर्णं त

चिक्षेप कान्तिं तव दन्तपङ्क्तिम् ।
विलोक्य पूर्णं मणिबीजपूर्णं
फलं विदीर्णं ननु दाडिमस्य ॥ २५ ॥
वदनममृतरश्मिं पश्य कान्ते तवोर्व्या-
मनिलतुलनदण्डेनास्य वार्धौ विधाता ।
स्थितमतुलयदिन्दुः खेचरोऽभूल्लघुत्वात्
क्षिपति च परिपूर्त्यै तस्य ताराः किमेताः ॥ २६ ॥

जानकी—( सानन्दं सोत्कण्ठा च प्राणवल्लभ-माह्लादयति )

रमण चरणयुग्मं तावकं भावयित्वा
मधुरगिरमुदारं रामदासी ब्रवीमि ।
कृतमपि गुरुधात्राऽऽस्वाद्य निर्णीयतां मे
वदनममृतरश्मेर्मण्डलं वा प्रियेण ॥ २७ ॥

कान्तिं विलोक्यात्मगतमलाकर्षणाय त्वदङ्गस्य साम्यत्वकथनाय च स्वदेहं दहने चिक्षेप । न तु तद्वर्णं प्राप्तवदिति भावः । हीरकमणितुल्यबीजपूर्णमपि दाडिमस्य फलं तव दन्तपङ्क्तिं विलोक्य तूर्णमेव विदीर्णं स्फुटितम् । तदुपमानबहिष्कृतत्वादिति भावः ॥ २५ ॥

वदनमिति । हे कान्ते प्रिये, पश्य । मुखगौरवं प्रत्यक्षमवलोक्य विधाता उर्व्यां भूमौ स्थितं तव वदनं वार्धौ क्षीरसमुद्रे स्थितशीतरश्मिं गुणसाम्यातिरेकज्ञापनाय अनिल एव तुलादण्डस्तेनातुलयत्तोलयामास । तदेन्दुः लघुत्वादल्पगुणाश्रितत्वात्खेचर उन्नतोऽभूत् । तदास्य चन्द्रस्य पूर्त्यै एतास्तारा अश्विन्याद्याः क्षिपति स्म । तस्य चन्द्रस्य पूर्त्यै यातास्ताराः किं कियन्त्यः । न कियन्त्य इत्यर्थः । गुणगौरवात्तव वदनमत्रैव स्थितं चन्द्रस्तु गुणाभावादूर्ध्वं गत इति भावः ॥ २६ ॥

ननु सिताखण्डश्चेदल्पतरः, गुडो बहुतरः तर्हि किं गौरवादेव गुणाधिक्यमित्यपेक्षायामाह—रमणेति । भावयित्वा निषेव्य, धात्रा

रामः–( सानन्दम् )

सीतां मनोहरतरां गिरमुद्गिरन्ती-
मालिङ्ग्य तत्र बुभुजे परिपूर्णकामः ।
रामस्तथा त्रिभुवनेऽपि यथा न कोऽपि
रामां भुनक्ति बुभुजे न च भोक्ष्यतीशः ॥ २८ ॥

मृदुसुरभिसुवर्णस्फीतकक्षापुटोद्य-
ल्ललितभुजलतायाः संपुटालिङ्गितायाः ।
सुरतरसवशाया राघवस्य प्रियाया
हरति हृदयतापं कापि दिव्या स्तनश्रीः ॥ २९ ॥

गुरुकृतमपि मे वदनं तथापि प्रियेण त्वया आस्वाद्य अमृत-
श्मेरापि मण्डलं वा निर्णीयताम् । यत्रैव स्वादातिशयस्तत्रैव गौरव-
मिति भावः ॥ २७ ॥

सीतामिति । मनोहरतरां गिरमुद्गिरन्तीं सीतां परिपूर्णः कामः
कामकलाविलासो यत्र । अन्यथेश्वरत्वस्य क्षतिः स्यात् । रामः सीतां
तथा बुभुजे । यथा कोऽपीश्वरो भूत्वा नाद्य भुनक्ति, न पुरा बुभुजे,
नाग्रे भोक्ष्यतीति ॥ २८ ॥

अथैतद्वर्णनमुपसंहरति–मृद्विति । प्रियायाः काप्यनिर्वचनीय
दिव्या अलौकिकी स्तनश्रीः, राघवस्य हृदयतापं हृत् अयतीति
हृदयः कामस्तस्य तापं व्यथां हरतीति । कीदृशी । मृदुः स्पर्श-
सहः सुरभिः सुगन्धः सुवर्णो गौरोज्ज्वलः स्फीतः किंचिदुन्नतः
चासौ कक्षापुटश्च तस्मादुद्यते ललिते भुजलते यस्याः सा तथा
कक्षापुटोद्यदिति पाठे स एवार्थः । एवंभूतात्कक्षापुटादुद्यते उपां
भुजमूले यस्याः । हरतु इति पाठः तत्राशीः । पुनः कीदृश्याः
संपुटालिङ्गितायाः संपुटाख्यालिङ्गनेनालिङ्गितायाः । उक्तं पञ्च-
सायके–'ऊर्ध्वं गते मध्यगते युवत्याः पार्श्वस्थितायाः परिरभ्य
देहम् ॥ यूनः स्त्रियो लोलनतो रतज्ञैरत्युद्भवः संपुटनामधेयः ॥
अयमेवोदयः तेनान्यथोक्तः–' उत्तानसुप्तप्रमदोपरिस्थः कक्ष्यां समा-

आगामिदीर्घविरहं चिरमाविरासी-
ज्ज्ञात्वैव रङ्गभवनेऽद्भुतकामकेलिः ।
श्रुत्वा तयोर्गिरमपूजयदोतुपत्नी-
मुद्गीर्णकर्णसरणां चरणायुधानाम् ॥ ३० ॥

इति श्रीहनुमन्नाटके द्वितीयोऽङ्कः ॥ २ ॥

---

वर्जेत ऊरुयुग्मम् ॥ संमर्दयानस्तनमण्डलं यद्रमेत सः स्यात्किल संपुटाख्यः ' इति ॥ २९ ॥

आगामीति । रङ्गभवने सुरतागारे चिरं कोऽपि भ्रम आविरासीत् । कयोः । तयोः सीतारामयोः । 'भ्रमेऽपि चिरमव्ययम्' इति चरकः । किं कृत्वैव । आगामी भविष्यो यो दीर्घविरहो दण्डकारण्यप्रस्थानरूपस्तं ज्ञात्वैव । कीदृशी सीता । अद्भुताः कामकेलयो यस्याः सा । अस्य रसस्यादौ तुरगांस्ताडयामासेति भ्रम उक्तः । प्रान्ते बिडालपत्नीपूजनमेव भ्रमः, अतः आद्यन्तभ्रमादिनिष्ठमेव जातम् । यद्वा । स्पष्टमेवमर्थः । रङ्गभवने अद्भुतकामकेलिः कामक्रीडा चिरमाविरासीत् । अन्यत्पूर्ववत् । अन्यत्कविनैव व्याख्यातम् । भ्रममेवाविष्करोति—चरणायुधानामिति । तयोः जानकी रामन्द्रयोर्मध्ये जानकीचरणायुधानां गिरं श्रुत्वा बिडालपत्नीमपूजयत् । अत्र बिडालपत्नीशब्दाद्बिडालपूजने पतिव्रतायाः परपुरुषस्पर्शो मा भूदिति सूचितम् । किमित्यपूजयत् । एवमुक्तं भवति । बालायाश्चेतसि चरणायुधशब्देनैव प्रातरुत्पद्यते । नेतरथा । अतः पूजिता बिडालपत्नी पूर्ववैरमनुस्मरन्ती चरणायुधमव्यग्रमश्नातु । तस्मिन्निवृत्ते प्रातःकालासंभवादनन्ता भवतु यामिनी, कामिनी पतिमालिङ्ग्याजस्रं सुखमनुभवत्वित्यभिप्रेतोऽर्थः ३०

इति श्रीमिश्रदासवि० हनुमन्नाटकदीपिकायां जानकीविलासो नाम द्वितीयोऽङ्कः ॥ २ ॥

---

# तृतीयोऽङ्कः ।

भुक्त्वा भोगान्सुरङ्गान्कतिपयसमयं राघवो धर्मपत्न्या सार्धं वर्धिष्णुकामः श्रवणमुनिपितुः प्राप्य हा शापकालम् । धत्ते तस्मिन्विवस्वान्मलिनकिरणतां हा महोत्पातहेतोरुल्कादण्डः प्रचण्डः प्रपतति नभसः कम्पते भूतधात्री ॥ १ ॥

दिग्भागो धूसरोऽभूदहनि बहुतरस्फारताराः स्फुरन्ति स्वर्भानोर्भानवीयं ग्रहणमसमये रौधिरी बिन्दुवृष्टिः । मध्याह्नोर्ध्वास्यकोशश्वगणरुतमतिस्फीतफेरुप्रचारो वारंवारं गभीरप्रलय इव महाकालचीत्कारघोरः ॥२॥

अथ रामवनलीलां वर्णयितुमङ्कमारभते—भुक्त्वेति । राघ रामो धर्मपत्न्या सार्धं कतिपयसमयं यथा स्यात्तथा सुरङ्गान्भो न्कामविलासानष्टौ भोगान्भुक्त्वा श्रवणमुनिपितुर्यज्ञदत्ताख्यवैश्यतपि नः शापसमयं प्राप । अत्रेयं कथा—मृगयां गतो दश वनगजभ्रमेण शब्दवेधित्वपरिचयाय कुम्भं जलेन पूरय श्रवणमुनिमदृष्ट्वैव जघान । ततोऽस्य पित्रा यज्ञदत्तेन श अस्यामेवावस्थायां पुत्रशोकात्परलोकं गमिष्यसीति तं वियो समयं प्राप । यद्वा राघव एष दशरथो धर्मपत्न्या सार्धं वर्धि कामोऽपूर्णकामाभिलाष इति उभयोर्विशेषणम् । भोगानष्टौ । च—'सुगन्धि वनिता वस्त्रं गीतं ताम्बूलभोजने ॥ वाहनं भू चेति भोगाष्टकमुदीरितम् ।' शापकालमेव द्योतयति—तस्मिन्स धत्ते व्यधत्त । भूतार्थे वर्तमानता नाटकालंकृतित्वात् । उक्तं दशरूपके—'प्रकृतं वर्तमानत्वं नाटकालंकृतिः परा' इति ॥ १ ॥

दिगिति । अहनि दिवैव स्फारो विस्तारः स्वर्भानो रा सकाशान्मध्याह्ने ऊर्ध्वमास्यकोशो येषां ते श्वगणाः सार्द

कैकेयी–( आत्मगतम् )
प्राप्तः किल मद्वाग्बन्धकालस्तर्हि द्रुतं राजानं भरतराज्यं प्रार्थयामि न खलु कालक्षेपः श्रेयसे । ( रहसि उपगम्य प्रकाशं ) राजन्नमङ्गलीरियं वधूर्यतोऽस्या आगमनमात्रेण महोत्पाताः संभवन्तीति ।

तानुत्पातानवेक्ष्य क्षितिपमथदशस्यन्दनं
क्रन्दयन्ती लोकान् शोकानलौघैः शिवशिव
तरसा भस्मसात्कुर्वतीव । कैकेयी वाचमूचे
निखिलनिजकुलाङ्गारमूर्तिः ससीतः शान्त्यै
पुत्रस्य राज्यं भवतु वनमभिप्रेष्यतामेष रामः ॥ ३ ॥

यगणास्तेषां रुतमभूत् । स्फीतो बहुतरः फेरूणां शिवानां प्रचार इतस्ततः सरणं वारंवारमभूत् । क इव गभीरप्रलय इव । कीदृशः महाकालो रुद्रस्तस्य चीत्कारेण घोरः । ( कलिकातामहानाटके द्वितीयतृतीयश्लोकयोर्मध्ये । अत्रान्तरे दशरथस्य चेष्टा–रामे नयचयं दृष्ट्वा लोकधर्मसहं च यत् ॥ यौवराज्याभिषेकाय नृपे मतिरभूत्ततः ॥ सुमन्त्रो बहिर्निःसृत्य नागरान्प्रति–स्वीयां जरामुपगतामवलोक्य राजा रामं च राज्यवहनक्षममाकलय्य ॥ राज्याभिषेकपरमोत्सवमस्य कर्तुं व्यादिष्टवान् पुरजनाः कुरुत प्रमोदम् ॥ रामाभिषेके पदविह्वलायाः कक्षच्युतो हेमघटस्तरुण्याः ॥ सोपानमारुह्य चकार शब्दं ठंठंठठंठंठठठंठंठंठः' एतत्पद्यत्रयम् ) । प्रलये रुद्रश्चीत्कारं करोति इति प्रसिद्धम् । स्फीतकेतुप्रचार इति वा पाठे स्पष्टार्थः । एकोत्तरशतं केतवः सन्ति ॥ २ ॥

तानिति । दशस्यन्दनं दशरथं क्रन्दयन्ती शोषयन्ती । शिवशिवेति खेदे । एष रामः शान्त्यै उत्पातजन्यदोषोपशमाय वनमभिप्रेष्यताम् । पुत्रस्य मम सुतस्य भरतस्य राज्यं भवतु इति वाचमूचे ॥ ३ ॥

दशरथः सकरुणंस्त्रीवचनस्वीकरणं मरणो-
त्साहं न नाटयन्महतीं मूर्च्छामासाद्य धर-
णीतलमुपगतः कथमपि चेतनामुपलभ्य–

रामं कामाग्रजमिव वनं प्रस्थितं वीक्ष्य शक्तो धर्तुं
प्राणान् शिवशिव कथं तान्विहायाथ वाहम् ॥
निर्मुक्तः स्यां वचनमनृतं तत्पुनर्नान्यथा मे
भूयाद्भूयस्तदनु वचनं हा बभाषे तथेति ॥ ४ ॥

रामभरतौ स्वंस्वं कालमधिगम्य हर्षशोकौ
नाटयन्तौ गुरोर्गिरा जटावल्कलच्छत्रचाम-
रधारिणौ वनप्रस्थानराज्याभिषेकारम्भाय
राजानं दशरथं नमस्कर्तुमवतरतः ।

राममिति । अथवा प्राणधारणाक्षमश्चेत्तान्प्राणानपि विहा[illegible]
अनृतप्रतिनिर्मुक्तः स्यां, तदेव वचनं अन्यथा मा भूत् । तदनु [illegible]
विचारानन्तरं, हा कष्टं ! तथेति यथा त्वं वदसि तथैवास्तु इति [illegible]
कैकेयीं बभाषे । अत्र राज्ञेति चिन्तितं चेत्कैकेय्युक्तं करोमि [illegible]
रामादर्शनेन मरणमाप्नुयां न चेदनृतं स्यात्तर्ह्यनृतं मा स्यात् । मर[illegible]
मेवास्तु इति भावः । अत्रेयं कथा–देवासुरयुद्धे देवपक्षे स्थितो रा[illegible]
मूर्च्छितः । तेनैव सहेयं तत्र गता कैकेयी रात्रावेनं भक्षयद्रा[illegible]
राक्षसेभ्यो योगबलेनारक्षत् । तदा प्रबुद्धेन राज्ञा वरद्वयमस्यै द[illegible]
तत्तया राज्ञि विन्यस्तं यथेच्छं ग्रहीष्यामीति । तद्वरादानादनृशं[illegible]
स्यामिति प्रसिद्धम् ॥ ४ ॥

रामभरताविति । अत्र प्रसिद्धशब्दार्थकथने रामायणविरो[illegible]
स्यात् । अस्याप्यग्रिमश्लोकैश्च तत एवं व्याख्यायते–अत्र राज्ञोज[illegible]
राज्यभ्रष्टो रामो वनं यातु, अराज्यार्हो भरतो राज्यं गृह्णातु, तस्त[illegible]
भरतोऽपि राज्यं परित्यज्य रामानुगमनायोद्यतोऽभूदिति पश्चात्तु[illegible]
अन्यथा भरताधर्मः स्यात् । रामभरतौ राजानं नमस्कर्तुमवत[illegible]

तत्र भरतः—

हा तात मातरहह ज्वलितानलो मां
कामं दहत्वशनिशैलकृपाणबाणाः ।
मश्नन्तु तान्विषहते भरतः सलीलं
हा रामचन्द्रपदयोर्न पुनर्वियोगम् ॥ ५ ॥
मां बाधते नहि तथा गहनेषु वासो
राज्यारुचिर्जनकबान्धववत्सलस्य ।
रामानुजस्य भरतस्य यथा प्रियायाः स्य
पादारविन्दगमनक्षतिरुत्पलाक्ष्याः ॥ ६ ॥
श्रुत्वा सुमन्त्रवचनेन सुतप्रयाणं
शापस्य तस्य च विचिन्त्य विपाकवेलाम् ।

हा॰त्यन्वयः । कीदृशौ । स्वंस्वं समयं वनगमनराज्यग्रहणरूपनाधिगम्य र्हर्षशोकौ । वनगमनात् रामो हर्षं, राज्यश्रवणात् भरतः शोकं, इति ति नाटयन्तौ । नाटकमेवाह—गुरोर्दशरथस्य गिरा जटाश्च वल्कलानि च तान्येव छत्रचामराणि च तद्धारिणौ । कस्मै । वनप्रस्थानमेव राज्याभिषेकस्तस्मै । एतदर्थेन नृपे सत्यत्वमायाति, भरतेऽपि धार्मिकत्वं, नृपेण रामे भरतेऽपि राज्यं प्रतिज्ञातं एकतरादानेऽनृतमेव । कस्मादुभाभ्यां वनमेव राज्यं मतम् । भरतो जटाधरः सन्रामाज्ञया दराज्यं चकारेति कैकेय्यापि वरदानात्सत्यत्वमेव । तत्र भरतः अशनिर्वज्रं शैला गिरयः, कृपाणः खड्गः, बाणः शरः ते च ते तानि वस्त्रादीनीति सुगमम् ॥ ५ ॥

रो भरतस्य राज्यारुचिश्च राज्याकरणम् । कीदृशस्य भरतस्य । जनके दशरथे बान्धवे मयि वत्सलस्य प्रेमवतः । यद्वा जनको विदेहतस्तद्बान्धवस्य तद्भ्रातुः प्रेष्ठस्य जामातृत्वान्ममानुजस्येति । अन्यत्सुगमम् ॥ ६ ॥

श्रुत्वेति । नृपेण दशरथेन सुमंत्रो मन्त्री तद्वचनेन सुतानां

हा राघवेति सकृदुच्चरितं नृपेण
निःश्वस्य दीर्घतरमुच्छ्वसितं न भूयः ॥ ७ ॥

मातस्तातः क्व यातः सुरपतिभुवनं हा कुतः
पुत्रशोकात्कोऽसौ पुत्रश्चतुर्णां त्वमवरजतया
यस्य जातः किमस्य । प्राप्तोऽसौ काननान्तं
किमिति नृपगिरा किं तथासौ बभाषे मद्वाग्बद्धः
फलं ते किमिह तव धराधीशता हा हतोऽस्मि ॥

गुरोर्गिरा राज्यमपास्य तूर्णं वनं जगामाथ रघुप्रवीरः । निषङ्गपृष्ठः शरचापहस्तस्तं लक्ष्मणो गामिव बालवत्सः ॥ ९ ॥

गुर्वाज्ञापरिपालनाय च वनं संप्रस्थितं राघवं
दृष्ट्वासौ त्वरिता विदेहतनया श्वश्रूजनं पृच्छति ।
नत्वा कोसलकन्यकांघ्रियुगलं पश्चात्सुमित्रां पुनः
दृष्ट्वा हा शुकसारिकापिककुलं रामानुगा प्रस्थिता

रामलक्ष्मणभरतादीनाम् । हा राघव रामराम इति एकवार रिते सति दीर्घतरं निःश्वस्य भूयो नोच्छ्वसितम् । देहं त्यक्तु भावः ॥ ७ ॥

भरतः महतीं मूर्छामासाद्य वैक्लव्यं नाटयति—मातरि उक्तिप्रत्युक्त्यात्रार्थोद्धाटनम् । अन्यत्सुगमम् । इति पुनर्मू भुवि पपात ॥ ८ ॥

गुरोरिति । शरयुक्तश्चापो हस्ते यस्य । मध्यमपदलोपी स: । अन्यार्थेऽथशब्दः । स कः । लक्ष्मणस्तं राघवमनुजगाम वत्सो गामिवेति ॥ ९ ॥

गुर्वाज्ञेति । गुरोर्दशरथस्याहमपि यास्यामीति पृच्छति । लकन्या कौसल्या तदंघ्रियुगलम् । शुकं च सारिकां च पिककुलं द्वन्द्वैक्यम् ॥ १० ॥

रामे प्राप्ते वनान्तं कथमपि भरतश्चेतनां प्राप्य तातं
नीत्वा देवेन्द्रलोकं मुनिजनवचनादूर्ध्वदेहक्रियाभिः ।
भ्रातुः शोकाज्जटावानजिनवृततनुः पालयामास नन्दि-
ग्रामे तिष्ठन्नयोध्यां रघुपतिपुनरागामिभोगाय वीरः ॥ ११ ॥

सद्यः पुरीपरिसरेषु शिरीषमृद्वी गत्वा जवा-
त्त्रिचतुराणि पदानि सीता । गन्तव्यमस्ति
कियदित्यसकृद्ब्रुवाणा रामाश्रुणः कृतवती प्रथ-
मावतारम् ॥ १२ ॥

रामः—

आदावेव कृशोदरी कुचतटीभारेण नम्रा पुन-
र्लीलाचंक्रमणं च नैव सहसे दोलाविधौ श्राम्यसि ।
स्रोतःकाननगर्तनिर्झरसरित्प्रायानपूर्वानिमान्भू-
भागानपि भूतभैरवमृगान्वैदेहि यायाः कथम् ॥ १३ ॥

अरुणदलनलिन्यास्निग्धपादारविन्दा

राम इति । अयोध्यानिकट एव नन्दिग्रामोऽस्ति तत्रस्थः सन् ।
नु जटाजिनादिवतः किमयोध्यापालनेनेति तत्राह । रघुपते रामस्य
नवासानन्तरभोगाय अपालने रामवचनभङ्गात्त्वमत्रस्थो राज्यं कुर्वि-
ते रामवचनम् ॥ ११ ॥

सद्य इति । त्रिचतुराणीत्यत्र 'अचतुरविचतुर' इत्यादिना समासः ।
सकृद्वारंवारम् । 'पर्यन्तभूः परिसरः' इत्यमरः ॥ १२ ॥

आदाविति । हे वैदेहि, इमान्वनसंबन्धिनो भूभागान्भूप्रदे-
शांस्त्वं कथं यायाः कथं गमिष्यसि । स्रोतांसि च काननानि च
गर्ताश्च निर्झराश्च सरितश्च तेषां प्रायो बाहुल्यं येषु तानपूर्वांस्त्व-
ा कदाप्यदृष्टान् । यास्यामीति चेत्तत्राह—लीलायै यन्मन्दिरेऽपि
चङ्क्रमणं तदपि त्वं न सहसे, दोलाविधावपि श्राम्यसि श्रममेषि ।
त्र हेतुमाह—आदाविति ॥ १३ ॥

रामः वारितामपि कृतप्रयाणां सीतां दृष्ट्वा धरणीं प्रार्थयते—

कठिनतनुधरण्यां यात्यकस्मात्स्खलन्ती ।
अवनि तव सुतेयं पादविन्यासदेशे
त्यज निजकठिनत्वं जानकी यात्यरण्यम् ॥ १४

पथि पथि कवधूभिः सादरं पृच्छ्यमाना
कुवलयदलनीलः कोऽयमार्ये तवेति ।
स्मितविकसितगण्डं व्रीडविभ्रान्तनेत्रं
मुखमवनमयन्ती स्पष्टमाचष्ट सीता ॥ १९ ॥

घुसृणमसृणपादा गम्यते भूः सदर्भा
विरचय शिवजातं मूर्ध्नि घर्मः कठोरः ।
इति ह जनकपुत्री लोचनैरश्रुगर्भैः
पथि पथिकवधूभि र्वीक्षिता शिक्षिता च ॥ १

अरुणेति। भो अवनि भूमे, इयं सीता अकस्मान्मन्दं मन्दं यथा
था कठिना तनुर्यस्या एवंभूताया धरण्याः सकाशात्स्खलन्ती
याति । कुत इत्यपेक्षायामाह—अरुणदला चेयं नलिनी च तद्व
समन्तात्स्निग्धे पादारविन्दे यस्याः सा । अतोऽस्याः पदविन्या
निजकठिनत्वं त्यज । कस्मात्त्यजामीति चेत्तत्राह—तव सुता ।
वात्सल्यमुदीरितम् । जानकी वनं याति । यद्वा कीदृश्या धर
अरुणदलनलिन्याः अरुणा ये दलाः पादाङ्गुलयस्तेषां नलि
दुःखदेत्यर्थः । 'नलो स्त्री नालदुःखयोः' इति चरकः । नलं
मस्या अस्तीति नलिनी मैथिली ॥ १४ ॥

पथिकवधूभिः पान्थस्त्रीभिः । यद्वा पथिपथि मार्गेमार्गे क
ग्रामीणस्त्रीभिः 'कोस्त्री ग्राम्यप्रकाशयोः' इति धनञ्जयः ।
न विकसितौ गण्डौ यस्मिन् व्रीडया विश्रान्ते नेत्रे यस्मिंस्त
खमवनमयन्ती । एतेन स्पष्टं मद्रमणोऽयमित्युक्तवती,
गिरेति ॥ १९ ॥

घुसृणेति । पथि मार्गे पथिकवधूभिरश्रुगर्भैर्लोचनैः कृत्वा
नकी वीक्षिता, इति शिक्षिता च । इति किं ? भो सीते, त्वं

तत्र चित्रकूटे जानकी सकरुणं सबाष्पम्—

मूर्ध्ना बद्धजटेन वल्कलभृता देहेन पादानतिं कुर्वाणे भरते तथा प्ररुदितं तारस्वरैः सीतया । येनोद्विग्नविहङ्गनिर्गततरुर्निःसंमदः श्वापदः शैलेन्द्रोऽपि किलैष भूरिभिरभूत्साश्रुः पयःप्रस्रवैः ॥ १७ ॥

रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्यामटवीं विद्धि गच्छ पुत्र यथासुखम् ॥१८॥

पदकमलरजोभिर्मुक्तपाषाणदेह-
मलभत यदहल्यां गौतमो धर्मपत्नीम् ।
त्वयि चरति विशीर्णग्रावविन्ध्याद्रिपादे
कतिकति भवितारस्तापसा दारवन्तः ॥ १९ ॥

णमसृणपादा कमलकोशनवनीततुल्याऽरुणकोमलचरणासि । भूः सदर्भा दर्भाङ्कुरसहिता भवत्या गम्यते । मूर्ध्नि घर्मः कठोरः । अतः शिवजातं शिरःपादत्राणं वल्कलजं पत्रजं वा विरचय ॥ १६ ॥

मूर्ध्नेति । पयःप्रस्रवैर्निर्झररूपैः एषः शैलेन्द्रश्चित्रकूटोऽपि साश्रुरभूत् । केन येन रुदितेन । कीदृशः शैलेन्द्रः । उद्विग्ना ये पक्षिणस्तैर्निर्गताः परित्यक्तास्तरवो यस्मिन् । संमदा हर्षरहिताः श्वापदा मृगादयो यस्मिन्सः । 'प्रमोदामोदसंमदाः' इत्यमरः ॥ १७ ॥

तत्रैव सुमित्रा लक्ष्मणं प्रति—राममिति । यथासुखमिति रामस्य यथा सुखं स्यात्तथैव गच्छ । अनुसरेत्यर्थः ॥ १८ ॥

पदेति । अथ भरते निवृत्ते रामेऽप्यन्यतः कृतप्रयाणे आह स्म जानकी रामं प्रति—विशीर्णाः सर्वतः प्रक्षिप्ता ग्रावाणो यस्मिन्स चासौ विन्ध्याद्रिपादश्च तस्मिंस्त्वयि चरति सति कतिकति तापसाः दारवन्तो भवितार इति । एतत्कुत इत्यपेक्षायामाह—यतो गौतमशापाच्छिलारूपामहल्यां तव पदकमलरजोभिर्मुक्तस्त्यक्तः पाषाणदेहो यया तामलभत इत्युक्तं भवति । त्वच्चरणस्पर्शेन यथा पूर्वमहल्या पाषा-

वैदेही अदृष्टराजमन्दिराद्बहिर्व्यवहारतया बालभावाच्च दैवयोगात् नौकासुखमनुभूय वने चरन्ती स्थलेऽपि भाराक्रान्ता सती नौः प्रचरतीति मन्यमानास्माभिरतः परमनयैव सुखप्रयाणं कर्तव्यं न पद्भ्यामितिबुद्ध्या राममधिकृत्याब्रवीत्–

उपलतनुरहल्या गौतमस्येव शापा-
दियमपि मुनिपत्नी शापिता कापि वा स्या
चरणनलिनसङ्गानुग्रहं ते भजन्ती
भवतु चिरमियं नः श्रीमती पोतपुत्री ॥२

दृष्ट्वातिदैन्यं जनकात्मजायास्तत्रैव रामः
सह लक्ष्मणेन । गोदावरीतीरसमाश्रि-
तेषु वनेषु चक्रे निजपर्णशालाम् ॥ २१ ॥

एषा पञ्चवटी रघूत्तम कुटी यत्रास्ति पञ्चावटी
पान्थस्यैकघटी पुरस्कृततटी संश्लेषभित्तौ वटी॥

णरूपापि देवीत्वं गता तथाऽद्यापि विन्ध्यग्रावाणस्त्रियो भविष्यन्
पूर्ववृत्तमनुस्मृत्योक्तम् ॥ १९ ॥

वैदेहीति । वने जले, स्थले भूमौ ।

उपलेति । यदीत्यर्थे वाशब्दः । इयमपि । पोतपुत्री नौका
नापि शापिता कापि मुनिपत्नी स्यात् तर्हि नोऽस्माकमेव श्री
भवतु सुखकारिणी स्यात् । मुनिपत्नी मा भूदिति भावः ।
गौतमस्य शापादुपलतनुः पाषाणदेहापि ते चरणनलिनसङ्ग
भजन्ती सती अहल्येव । सा यथा शिलात्वं त्यक्त्वा अहल्यात्वं
तथेयं नौकापि मुनिस्त्रीत्वमायातु अस्मदारोहणसुखाभावात् । इ
वत्यां सीतायाम् ॥ २० ॥

दृष्ट्वेति । वनेषु दण्डकसंज्ञकेषु ॥ २१ ॥

लक्ष्मणस्तत्रैव तत्कुटीरमणीयतामालोक्य–एषेति । हे रघू

**गोदा यत्र नटी तरङ्गिततटी कल्लोलचञ्चत्पुटी**
**दिव्यामोदकुटी भवाब्धिशकटी भूतक्रियादुष्कुटी॥२२॥**

एषा पञ्चवटी कुटी। भवत्विति शेषः। कीदृशी। पञ्चवटी पञ्च-वटयुक्ता। एतेनापि निविडच्छायात्वमुक्तम्। पुनः कीदृशी। यत्र पञ्चा-वटी अस्ति। पञ्चानामवटानां समाहारः पञ्चावटी पञ्चवटवृक्षमूलेषु पञ्च सरस्वतीगर्ताः। 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः। पुनः कीदृशी। पान्थस्य प्रवासिनः एकमपेक्षितं जलच्छायादिकं घटयते उद्दीपय-तीति। पुनः कीदृशी। पुरस्कृतौ शोभमानौ तटौ कुड्यापेक्षया द्वारभागौ यस्याः सा। पुनः कीदृशी। संश्लेषो दारापत्याभिनिवे-शस्तस्य भित्तौ संचये वटी तन्निवर्तकौषधवटिका। पुनः कीदृशी। यत्र यत्समीपे गोदा गोदावरी नटी नर्तकीरूपा। कीदृशी गोदा। तरङ्गितौ तटौ यस्याः सा। पुनः कीदृशी गोदा। कल्लोलैश्चञ्चन्तः पुटा जलनिर्गममार्गा यस्यां सा कल्लोलचञ्चत्पुटी। पुनः कीदृशी गोदा। अलौकिको यः पद्मामोदस्तस्य कुटी कूपिका। पुनः कीदृशी भवाब्धिशकटी पोतरूपा। पुनः कीदृशी गोदा। भूतक्रियादुष्कुटी भूतानां क्रियाभिः सामान्यधर्मैर्दुष्प्रापा। बहुपुण्यलभ्येत्यर्थः। अत्र विशेषणेषु वटीनटीकुटीसादृश्यं चिन्त्यं विस्तरभयान्न विवृतम्। अत्र भवाब्धिशब्दबलादन्योऽप्यर्थः संभवति। हे रघूत्तम, एषा कुटी भवतु। कीदृशी। पञ्चानां पृथिव्यप्तेजोवाय्वाकाशादीनां वटी निह-न्त्री 'वट विशातने' यां प्राप्य न पुनर्भव इति। यत्र यस्यां पञ्चानां रूपरसगन्धस्पर्शशब्दानां अवटी संगतिनिवर्तको विधिरस्ति 'वट वर्जने' अत्रेन्द्रियाणि सुजयानीति। पान्थस्य मोक्षमार्गकृत-प्रयाणस्य एका निरुपमा घटी विश्रामस्थानं 'घट विश्रमणे'। यत्र यस्यां गोदा गावो वेदवाचः ताः ददातीति गोदा मुनिसभा नटी प्र-सिद्धाऽऽस्ते। 'नट आविर्भावे'। कीदृशी गोदा। पुरस्कृता तटी समित्कुशसमृद्धिर्यया सा। 'तटच् समृद्धौ'। पुनः कीदृशी संश्लेषो दारापत्याद्यभिनिवेशस्तस्य भित्तौ संचये वटी वज्ररूपा। 'वज्रं वटी

क्रीडाकल्पवटं विसर्पितजटं विश्वाम्बुजन्मावटं
पिष्टाण्डौघघटं धृताङ्घ्रिशकटं ध्वस्तक्षमासंकटम्।
विद्युच्चारुरुचा विधूतकपटं सीताधरालम्पटं
भिन्नारीभघटं विरुग्णशकटं वन्दे गिरां दुर्घटम्॥२३॥

पविः सारः' इति शाश्वतः।पुनः कीदृशी। रागादिषु प्राप्ता ये जीव
स्तेषां तटिनी निःसारणतीर्थवती। पुनः कीदृशी। कल्लोलैर्देवैरि
स्ततश्चङ्क्रम्यमाणानि निकुञ्जानि यस्याः सा।'कल्लोलो देववारिणो
इति धरणिः।'निकुञ्जपुटयोः पुटः' इति विश्वः। पुनः कीदृशी
दिव्यो नैसर्गिको य आमोदः वासना तस्य कुटी क्षयकरी' निव
सक्षययोः कुटी' इति चरकः। अत एव भवाब्धिशकटी संसारता
णनौका। नन्वेवं चेत्सर्वे कथं न विद्युरिति चेत्तत्राह–भूतानां प्राणि
क्रियाभिर्दूरदृष्टैर्दुष्कुटी। दुष्प्रापेत्यर्थः। एते धातवो कविकल्पद्रु
चिन्त्यास्तद्रूपं च॥ २२॥

जानकी संन्यस्ताध्वपरिश्रमा मुग्धावतारं पुराणपुरुषं वन्दते स
तत्रैव कुटीकरणाज्जातानन्दा प्रणमति। अहं रामं वन्दे इत्यन्वयः
कीदृशम्। क्रीडानां नरसुरतिर्यगाद्यवताराणां कल्पवटं अवताराः य
शक्तिमास्थाय क्रीडन्ति यथेच्छम्। ननु प्रतियुगावतारे जीवो न
नेत्याह–विसर्पितवटं प्रकटीकृतविश्वतनुम्। ननु विश्वजनकत्वेन तत्
तद्दोषवान्किं नेत्याह–विश्वाम्बुजन्मावटं विश्वमेवाम्बुजन्म कमलं तत्
काशाय आ समन्ततः वटः सूर्यः। यथा सूर्यः पद्मं बोधयति त
तद्गन्धादि गृह्णाति तथेश्वरोऽपीक्षयैव करोति नतु तद्दोषभाक्
'वटः सूर्ये तरौ लोके' इति शाश्वतः। सूर्यवन्नाशवान्किं नेत्याह
पिष्टाण्डौघघटं चूर्णीकृतब्रह्माण्डसमूहम्। स्वयमेव नाशकादित्यर्थः
तर्हि सर्वानेव नाशयति किं नेत्याह–धृताङ्घ्रिशकटं धृतौ ह
स्वाङ्घ्री यैस्ते धृताङ्घ्रयो भक्तास्तेषां संसारोत्तारणाय बाह्यं पोतमि
एतदेव दर्शयति–ध्वस्तं दूरीकृतं क्षमायुक्तानां अम्बरीषादीनां स

अथ मारीचः अतीतानागतवर्तमानत्रिकालदर्शनो लङ्कापतेराज्ञामासाद्य चिन्तयामास–

रामादपि च मर्तव्यं मर्तव्यं रावणादपि ।
उभयोर्यदि मर्तव्यं वरं रामो न रावणः ॥ २४ ॥

सुललितफलमूलैस्तत्र कालं कियन्तं
दशरथकुलदीपे सीतया लक्ष्मणेन ।
गमयति दशकण्ठोत्कण्ठितप्रेरितं द्रा-
क्कनकमयकुरङ्गं जानकी संददर्श ॥ २५ ॥

येन तम् । मध्यमपदलोपी समासः । तर्हि भक्तपालकत्वाद्विषमः किं नेत्याह–विद्युदिव चारुरुक् यस्याङ्गदीप्तिस्तया विधूतः कपटो मायाकृतदम्भो येन तम् । अतो यः कोऽपि तद्रूपं स्मरति तस्य दम्भक्षतिर्नेतरेषाम् । अतो ज्ञानाज्ञानाभ्यां जीवानामेव विषमत्वं नतु तवेति भावः । ननु एतादृक्कथं प्राप्यते तत्राह–सीताधरालम्पटं भक्तार्थमाविर्भूतमित्यर्थः । ननु तर्हि कामी किं नेत्याह–भिन्ना अरयः कामादय एवेभा मतंगजास्तेषां घटाः समूहा येन तम् । ननु जितकामादित्वादिरहितैकारिपुः किं नेत्याह । विरुग्णशकटं विशेषेण रुग्णाः खण्डीकृताः शकटा दैत्यराजानो येन 'शकौ यवनराक्षसौ' इति धरणिः । 'टो महेश्वर आख्यातः' इत्येकाक्षरः । नन्वेवं मां सर्वे किं न विद्युरिति चेन्न । गिरां दुर्घटं वाचामगोचरम् । अनिर्वचनीयमित्यर्थः ॥ २३ ॥

रामादिति । वरं रामो न रावण इत्यस्यायमर्थः । रामान्मरणे परत्र मोक्षः स्यादिह च स्वामिकार्यमित्यर्थद्वयमिति ॥ २४ ॥

सुललितेति । इति विचार्य मृगो भूत्वा तत्पर्णशालाभ्यर्णं गतः । दशरथकुलदीपे रामे सीतया लक्ष्मणेन च सह तत्र कालं गमयति सति जानकी कनकमयकुरङ्गं संददर्श । कीदृशम् । दशकण्ठस्य उत्कण्ठितेन उत्कण्ठया सीताहरणाभिलाषेण प्रेरितं प्रस्थापितमिति ॥२५॥

देहं हेममयं हरिन्मणिमयं शृङ्गद्वयं वैद्रुमा-
श्चत्वारोऽपि खुरा रदच्छदयुगं माणिक्यकान्तिद्युति
नेत्रे नीलसुतारके सुवितते तद्वच्चलं प्रेक्षितं
तत्तद्रत्नमयं किमत्र बहुना सर्वाङ्गरम्यो मृगः ॥२६॥
साङ्गं मायाकुरङ्गं द्रुतनिधननिशाचारिमारीचमग्रे
धावन्तं संचरन्तं क्षणमपि गहने जानकी याचते स्म ।
रामं कामाभिरामं निशितशरधनुर्धारिणं लक्ष्मणेन
क्षिप्रं तद्रक्षणायोल्लिखिततटभुवा सोऽप्यगात्तद्वधाय ॥

इति हनुमन्नाटके तृतीयोऽङ्कः ॥ ३ ॥

---

## चतुर्थोऽङ्कः ।

आन्दोलयन्विशिखमेककरेण सार्धं
कोदण्डकाण्डमपरेण करेण धुन्वन् ।
सन्नह्य पुष्पलतया पटलं जटानां
रामो मृगं मृगयते वनवीथिकासु ॥ १ ॥

देहमिति । सुगमम् ॥ २६ ॥

साङ्गमिति । जानकी तं मायामृगं प्रति रामं याचते स्म । प्रार्थ-
यामासेत्यर्थः । कीदृशम् । द्रुतं अचिरभावि निधनं यस्य द्रुतनि-
धनश्चासौ निशाचरश्च स चासौ मारीचश्च तम् । अग्रे धावन्तं अति-
गहने क्षणं यथा स्यात्तथा संचरन्तम् । सोऽपि रामो लक्ष्मणेन स-
तद्वधाय क्षिप्रमगात् । लक्ष्मणेनानुगत इत्यध्याहारो वा । कीदृशेन
तद्रक्षणाय सीतासंरक्षणार्थं लिखितौ धनुष्कोट्या तटौ द्वारोपान्त-
भागौ यस्याः सा भूः कुटी येन रामधनुर्लेखां कोऽपि नाक्रमिष्यतीति ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायां
औत्पातिको नाम तृतीयोऽङ्कः ॥ ३ ॥

---

आन्दोलयन्निति । एककरेण सार्धं विशिखमान्दोलयन्निति मृग-
यते अवलोकयति ॥ १ ॥

हस्ताभ्यां समुपैति लेढि च तृणं न स्पृश्यतां गाहते
गुल्मान्प्राप्य निवर्तते किसलयानाघ्राय चाघ्राय च ।
भूयस्त्रस्यति पश्यति प्रतिदिशं कण्डूयते स्वां तनुं
दूरं धावति तिष्ठति प्रचलति प्रान्तेषु मायामृगः ॥२॥
ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ३

बाणेन दिव्येन रघुप्रवीरस्ततो मृगं वक्षसि
बद्धलक्ष्यः । विव्याध यावत्तरसा तपस्वी
दशाननस्तावदिहाजगाम ॥ ४ ॥

मारीचमृगयाव्यग्रे रामे प्राप्ते च रावणे । भया-
दिव कुरङ्गीणामस्याः पश्यामि लोचने ॥ ५ ॥

हस्ताभ्यामिति । मायामृगः प्रान्तेषु प्रचलति प्रान्ते शालाभ्या-शेषु मायापूर्वकं मृगजात्यनुकरणमाह—कदाचिदिति पदाध्याहारः सर्व-त्रानुवध्यते । हस्ताभ्याशं हस्तग्राह्यत्वं लेढि ‘ लिह आस्वादने ’। न स्पृश्यतामस्पृश्यत्वम् । सुगमम् ॥ २ ॥

रामो मृगं लक्ष्मणं दर्शयति—ग्रीवेति । ग्रीवाभङ्गेन अभिरामं यथा स्यात्तथा मुहुरनुपतति पश्चादवलोकयति स्यन्दने रथे बद्धा दृष्टिर्येन सः भूयसा पश्चार्धेन पश्चिमशरीरभागेन मदीयशरपातभयात्पूर्वकायं प्रविष्टः पश्चात्संकुचितगात्र इति । अर्धभक्षितैर्दर्भैः कीर्णं विक्षिप्तं वर्त्म येन सः । कीदृशैर्दर्भैः । श्रमेण विवृतमत्युद्घाटितं यन्मुखं ततो भ्रंशिभिः पातुकैः । एनं पश्य उदग्रप्लुतत्वादुत्कटोत्पतनाद्वियत्याकाशे बहुतरं प्रयाति गच्छति भूमौ स्तोकमल्पं प्रयाति ॥ ३ ॥

ततो वनान्तरे । बाणेनेति । यावत् रघुवीरो बाणेन मृगं विव्याध, तावदेव तपस्विवेषधारी दशाननः इह सीतासमीपे आजगामेत्यन्वयः ४

मारीचेति । रामे मारीचमृगयाव्यग्रे सति रावणे प्राप्ते सति,अस्याः

स व्याहरद्धर्मिणि देहि भिक्षामलङ्घयँ-
ल्लक्ष्मणलक्ष्मलेखाम् । जग्राह तां पाणितले
क्षिपन्तीमाकारयन्तीं रघुराजपुत्रौ ॥ ६ ॥

रे रे भो परदारचोर किमरेऽधीरं त्वया गम्यते
तिष्ठाधिष्ठितचन्दनाचलतटः प्राप्तो जटायुः स्वयम्
मुञ्चैनां पतिदेवतां न खलु चेन्मच्चण्डतुण्डांकुश-
क्रूरावस्करणव्रणासृगुरसः पास्यन्ति गृध्रास्तव ॥ ७

जन्म ब्रह्मकुले हरार्चनविधौ कृत्वा शिरःकृन्तनं
शक्तिर्वज्रिणि घोरदण्डदलनव्यापारशक्तं मनः ।

सीताया लोचने भयात्कुरङ्गीणामिव पश्यामि । किमप्यनिर्वचनीयं
त्रलौल्यं दृष्ट्वा ननन्देति भावः ॥ ५ ॥

स इति । स रावणो व्याहरदित्युवाच । किं तदाह । हे धर्मि
आतिथ्यदानादानपुण्यपापज्ञे भिक्षां देहि । लक्ष्मणेन कृताया ल
णाश्चिह्नस्य लेखा तामलंघयन्सन् तद्बहिरागत्य पाणितले क्षिपन्तीं भि
ददतीं जग्राह हृतवान् । कीदृशीम् । रघुराजो दशरथस्तत्पुत्रौ रा
लक्ष्मणौ आकारयन्तीमाह्वयन्तीम् ॥ ६ ॥

जटायुर्दशरथमैत्रीमनुस्मरन्रावणं ज्ञात्वा कथयति—रेरे इति नी
संबोधने, भो अहो परदारचोर, त्वया अधीरं तूर्णं यथा स्यात्तथा
गम्यते ? धीरास्तु शनैर्गच्छान्ति न त्वरया । अरे तिष्ठ । स्वय
जटायुः प्राप्तोऽस्मि । अधिष्ठितोऽधिवासितः चन्दनाचलस्य मलय
तटो येन । एतेन प्राशस्त्यमुक्तम् । एनां मुञ्च । ननु इयमेव प्र
तीति चेन्न । कीदृशी । पतिरेव देवता यस्याः सा । तां चेन्न त्यज
तर्हि तवोरसः सकाशाद्गृध्रा मदीयं यच्चण्डं तुण्डं तदेवांकुशस्तेन य
रमवस्करणं ततो ये व्रणास्तेभ्यो निःसृतमसृग्यस्मिंस्तदुरस
पास्यंति । कर्मणि षष्ठी ' तदवस्करणं प्रोक्तं तुण्डेनोद्भिद्य कर्षणम्
इति हलायुधः ॥ ७ ॥

रावणं ज्ञात्वा अबलाशौर्याकुलवान् चौर्यं करोषि तत्तु त्वयि न सं

**हेलोल्लासितकेलिकन्दुकनिभः कैलास उत्पादित-**
**स्तत्किं रावण लज्जसे न हरसे चौर्येण पत्नीं रघोः ८॥**

**रावणः–( सक्रोधं स्वगतं च )**

**मैनाकः किमयं रुणद्धि पुरतो मन्मार्गमव्याहतं**
**शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रा-**
**दपि । तार्क्ष्यः सोऽपि समं निजेन विभुना जा-**
**नाति मां रावणं हा ज्ञातं स जटायुरेष जरसा-**
**क्लिष्टो वधं वाञ्छति ॥ ९ ॥**

वतीत्याह—जन्म ब्रह्मकुले इति । हरार्चनविधौ शिरःकृन्तनं कृत्वा वह्नि-णि देवेशे शक्तिः । मनः घोरदण्डदलनव्यापारशक्तं ये घोरदण्डा दुर्निग्रहा-स्तेषां निग्रहव्यापारे शक्तं समर्थम् । भवता कैलासो गिरिरुत्पाटितः । कीदृशः । हेलयाऽनायासेनोल्लासित उद्गमितो यः केलये क्रीडार्थं कन्दुकः तत्सदृशः । यथैव केलिकन्दुकस्तथैव गिरिरिति भावः । तत्तस्मादेवं बले सति चौर्येण यत् रघोः रामस्य पत्नीं हरसे तत्किं कस्मान्न लज्जसे ? गूढाक्षेपः ॥ ८ ॥

रावणः सक्रोधं स्वगतं च—अयं मैनाको गिरिः किम् ? किं वि-तर्के । अयं कः पुरतो भूत्वा अव्याहतं देवैरप्यखण्डितं मदीयं मार्गं रुणद्धि ? सपक्षत्वात्तस्य मैनाकस्य शक्तिर्मन्मार्गरोधनसामर्थ्यं कुतः । यतः स गिरिर्महेन्द्रादपि इन्द्रसकाशादपि यद्वज्रपतनं तस्मादेव भीतः, इन्द्र एव मत्तो बिभेति । तन्निर्जितस्य गिरेर्मयि का शक्ति-रिति भावः । तर्ह्ययं तार्क्ष्योऽस्ति न सोऽपि गरुडः । निजेन विभुना समं विष्णुबलतुल्यबलं मां रावणं जानाति । रावयति स्वबलेन लो-कानिति रावणः । हेति कष्टम् । ज्ञातं एष स जटायुः । स कः । यो जरसा वार्धक्येन व्याप्तः सन् वधं वाञ्छति । हा कष्टं वृद्धस्य हनने किं यश इति कष्टम् । विजयोऽयमलंकारः । तदुक्तं दण्डिना—'यः पूर्वोत्तरपक्षाभ्यां निर्णेता भवति स्वयम् । शब्दचातुर्यतो विज्ञैर्विजयः समुदीरितः ' इति ॥ ९ ॥

मा भैषीः पुत्रि सीते व्रजति मम पुरो नैष दूरं दुरात्मा रेरे रक्षः क्व दारान्रघुकुलतिलकस्यापहृत्य प्रयासि। चञ्च्वाक्षेपप्रहारत्रुटितधमनिभिर्दिक्षु विक्षिप्यमाणैराशापालोपहारं दशभिरपि भृशं त्वच्छिरोभिः करोमि ॥ १० ॥

अक्षं विक्षिपति ध्वजं दलयते मृद्नाति नद्धं युगं चक्रं चूर्णयति क्षिणोति तुरगान्रक्षःपतेःपक्षिराट्। रुन्धन्गर्जति तर्जयत्यभिभवत्यालम्बते ताडयत्याकर्षत्यवलुम्पति प्रचलति न्यञ्चत्युदञ्चत्यपि ॥ ११ ॥

क्रुद्धस्ततो दृढचपेटशिलातलेन
रक्षः पिपेष गहनेऽद्भुतपक्षिराजम् ।
ईषत्स्थितासुरपतद्भुवि राम राम
रामेति मन्त्रमनिशं निगदन्मुमुक्षुः ॥ १२ ॥

जटायुः क्रोधमभिनीय—मा भैषीर्भयं मा कार्षीः । दारशब्दो भूम्न्येव । दशभिस्त्वच्छिरोभिर्दशानामाशापालानामुपहारं करोमि। करिष्यामीत्यर्थः । कीदृशैः शिरोभिः । दिक्षु दशसु दिशासु विक्षिप्यमाणैः । पुनः कीदृशैः । चञ्च्वोः आक्षेपेण ये प्रहारास्तैस्त्रुटिता धमन्यो नाड्यो येषां तैः । 'नाडी तु धमनिः शिरा ' इति विश्वः। अन्यत्सुगमम् ॥ १० ॥

अक्षमिति । पक्षिराट् जटायुः रक्षःपते रावणस्याक्षं चक्रान्तरालकाष्ठं विक्षिपति विरुद्धं चालयति । दलयते त्रोटयति। मृद्नाति मर्दयति । गर्जति स्वयं तर्जयति । तमभिभवति तिरस्करोति । आलम्बते मार्गमवलम्ब्य तिष्ठति । ताडयति तं प्रहरति । आकर्षति तत्केशान्विलिखति । अवलुम्पति । तद्वासांस्यपहरति । प्रचलति स्वपक्षलाघवमाविष्करोति । न्यञ्चति शिरस्तत्प्रहारपातेन स्वयं नम्रीभवति। उदञ्चति स्वचरणकृततत्प्रहारवञ्चनाय उच्चैर्गच्छति ॥ ११ ॥

रावणः क्रोधं नाटयति—क्रुद्ध इति । करतलप्रहारः स एव शिलातलस्तेन ॥ १२ ॥

न मैत्री निर्व्यूढा दशरथनृपे राज्यविषया
न वैदेही त्राता हठहरणतो राक्षसपतेः ।
न रामस्यास्येन्दुर्नयनविषयोऽभूत्सुकृतिनो
जटायोर्जन्मेदं वितथमभवद्भाग्यरहितम् ॥ १३ ॥

हा राम हा रमण हा जगदेकवीर
हा नाथ हा रघुपते किमुपेक्षसे माम् ।
इत्थं विदेहतनयां मुहुरालपन्ती-
मादाय राक्षसपतिर्नभसा जगाम ॥ १४ ॥

आकृष्यमाणाभरणानि मुक्त्वा सैरध्वजी मारुतिमद्रिमौलौ । उवाच रामाय सलक्ष्मणाय वराय देयानि सदेवराय ॥ १५ ॥

रामः शुष्के स्थाणौ दक्षिणे रटन्तं करटमवलोक्य पुनरागच्छन्निजप्राणप्रयाणमेव मन्वानः क्षणं विश्रम्य—

जटायुरात्मानं शोचयन्नाह । राज्यं विषयो यस्याः त्वद्राज्यं पालयामीति मैत्री न निर्व्यूढा न निष्पन्ना । सुकृतिनो रामस्य यतः किमपि कृतं न जातम् । अत एव भाग्यरहितमिति संतापमकरोदिति १३॥

हा रामेति। उपेक्षसे उपेक्षां करोषि ॥ १४ ॥

आकृष्येति । आकृष्यमाणा सैरध्वजी सीरध्वजो जनकस्तदपत्यं स्त्री सैरध्वजी सीता । अद्रिमौलौ गिरिशिखरे स्वाभरणानि मुक्त्वोन्मुच्य मारुतिं हनुमन्तमुवाच । किमुवाचेत्याह—वराय श्रेष्ठाय रामाय, देवराय पतिभ्रात्रे लक्ष्मणाय चाभरणानि देयानि ॥ १५ ॥

रामेति । दक्षिणभागे शुष्के स्थाणौ नीरसवृक्षखण्डे करटमवलोक्य पुनरागच्छन्मारीचं हत्वा पर्णशालां प्रत्यागच्छन्सन् ' काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ' इत्यमरः ।

मायाकुरङ्गं विनिहत्य रामो भ्रात्रा सहागत्य च पर्णशालाम् । कोणत्रयेषु प्रसमीक्ष्य सीता दृष्टश्चतुर्थो न च शोकभीत्या ॥ १६ ॥

इति श्रीहनुमन्नाटके चतुर्थोऽङ्कः ॥ ४ ॥

## पञ्चमोऽङ्कः ।

रामः प्राणोत्क्रमणसमयादपि घोरतरं योगसमयमधिगम्य पर्णशालान्तरालमालोक्य कथमपि विदीर्णहृदयमार्गादुज्जिगमिषून्प्राणान्धारयंस्तदुत्तरीयमुपलभ्य जानकीं स्मरन्नरोदीत्–

द्यूते पणः प्रणयकेलिषु कण्ठपाशः
क्रीडापरिश्रमहरं व्यजनं रतान्ते ।
शय्या निशीथसमये जनकात्मजायाः
प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥ १ ॥

बहिरपि न पदानां पङ्क्तिरन्तर्न काचित्
किमिदमियमसीता पर्णशाला किमन्या ।
अहमपि किल नायं सर्वथा राघवश्चेत्
क्षणमपि नहि सोढा हन्त सीतावियोगम् ॥ २ ॥

कोणत्रयेषु सीतां प्रसमीक्ष्य चतुर्थः शालाकोणस्तेन रामेण न दृष्टः । कया तदलाभातिशोकभीत्या इत्यर्थः ॥ १६ ॥

इति श्रीमिश्र० हनुम० टीकायां सीताहरणं नाम चतुर्थोऽङ्कः ॥४॥

ततो रामस्य किं वृत्तमासीत्तदाह–द्यूतेति । विधिवशाद्दैवयोगाज्जनकात्मजाया इदमुत्तरीयं मया प्राप्तम् । किं तत् । यत्तदोर्नित्ययोगात् यत् द्यूते पण इत्यादि सर्वं सुगमम् ॥ १ ॥

तच्चरणचिह्नमालक्ष्य विचिकित्सति–बहिरिति । बहिरपि पर्णशालाबहिर्भागेऽपि काचित्स्त्रियः पुरुषस्य वा पदानां पङ्क्तिरन्तः

मध्योऽयं हरिभिः स्मितं हिमरुचा नेत्रे कुरङ्गीगणैः
कान्तिश्चम्पककुड्मलैः कलरवो हाहा हृतः कोकिलैः।
मातङ्गैर्गमनं कथं कथमहो हंसैर्विभज्याधुना का-
न्तारे सकलैर्विनाश्य पशुवन्नीतासि भो मैथिलि॥ ३॥
युक्तमेव हि कैकेय्या यदहं प्रेषितो वनम् ।
ईदृशी यस्य मे बुद्धिर्मृगः क्वापि हिरण्मयः ॥ ४ ॥
आलिङ्गिताऽत्र सरसीरुहकोरकाक्षी
पीताधरेति मधुरे विधुमण्डलास्या ।
रङ्गावतारमकरन्दविमर्दितानि
पुष्पाण्यमूनि दयिते क्व गतेत्यरोदीत् ॥ ५ ॥

कुटीमध्येऽपि न । तदिदं किमिति विचिकित्सा । इयं याऽत्रस्था सा असीतैव न पर्णशालैवान्या किं किल । सर्वथा अयमहं राघव एव न चेत्स्यात्तर्हि क्षणमपि सीतावियोगं न सोढा । एतेनो-न्मादो दर्शितः । तदुक्तं रसोदधौ—'प्रौढानन्दायतो विरहात् यो हृ-द्भ्रमः स उन्मादः' इति ॥ २ ॥

मध्योऽयमिति । भो मैथिलि, ज्ञातं कुत्रापि त्वदीयं चिह्नमपि न लक्ष्यते । अतः कान्तारे च अधुना मद्विना भूतावसरे सकलैरेतै-र्विनाश्य हत्वा नीतासि गृहीतासि पशुवत् । यथा पशुर्विनाश्य गृह्यते तद्वत् । येनाङ्गेन येषामवमानस्तत्तदङ्गं तैरेव गृहीतमि-त्याह—मातङ्गैः गजैर्हंसैश्च गमनमेव कथं कथं विभक्तमिति । अहो एतदाश्चर्यम् । उभयैरेकं कथं गृहीतमिति । एतेन गुणकीर्तनावस्था-दर्शिता । सोक्ता रसोदधौ—'वैरहकान्ताविषये प्रसंशनं स्याद्गुणाख्या-नम् ' इति ॥ ३ ॥

युक्तेति । आत्मानं शोचन्नाह—ईदृशी असंबद्धा । असंबद्धात्वमा-ह—हिरण्मयो मृगः क्वापि दृष्टः श्रुतो वास्ते ? न क्वापीत्यर्थः ॥ ४ ॥

प्रकीर्णपुष्पमालां पर्णशालामालोक्याह—आलिङ्गितेति । रामः इति अरोदीत् । इति किम् ? हे दयिते, त्वं क गता ? अत्र त्वं आलि-ङ्गिता मयेति शेषः । आलिङ्गनसुखेन नेत्रसंकोचात्कोरकत्वमुक्तम् ।

गाहंगाहं गह्वरकान्तारवनान्ता–
द्दर्शंदर्शं दर्पकभल्लीरिव वल्लीः ।
स्मारंस्मारं दूरगतां तामथ कान्तां
रामः कान्तामद्रिचरो दीनमरोदीत् ॥ ६ ॥

स भूरजोरञ्जितसर्वकायो बभौ विभुर्मन्यु-
विदीर्णचेताः । योषिद्वियोगानलदह्यमानं
स्वकान्तमालिङ्गयतीव भूमिः ॥ ७ ॥

सीतेति हा जनकवंशजवैजयन्ति
हा मद्विलोचनचकोरनवेन्दुलेखे ।
इत्थं स्फुटं बहु विलप्य विलप्य राम-
स्तामेव पर्णवसतिं परितश्चचार ॥ ८ ॥

हा जानकि प्रचलितोत्पलदृक्नेत्रे
हा मे मनःकमलकाननराजहंसि ।
एष प्रिये तव वियोगजवह्निदग्धो
दीनं प्रयामि भवतीं क विलोकयामि ॥ ९ ॥

रे वृक्षाः पर्वतस्था गिरिगहनलतावायुना वी-
ज्यमाना रामोऽहं व्याकुलात्मा दशरथतनयः

'कलिका कोरकः पुमान्' इत्यमरः । अतिमधुरत्वे हेतुः–विधुमण्ड
लसदृशास्या । रङ्गानां केलीनामवतार आविर्भावस्तत्र यो मकरन्द
कोमलरसः तेन मिश्रितानीत्यर्थः ॥ ५ ॥

गह्वराणि सघनानि कान्ताराणि दुर्गवर्त्मानि येषु तानि । गा
गाहं अवगाह्य । अत्र सर्वत्र ल्यवर्थे णमुल् । तस्मिन्सति द्वित्वम्
कामभल्लीरिव वल्लीः । दर्शंदर्शं दृष्ट्वादृष्ट्वा । स्मारंस्मारं स्मृत्वास्मृत्वा
कीदृशीं कान्ताम् । कस्य रामसुखस्य अतोऽस्याः तां विरहेण राम
दुःखदामिति । अद्रिचरो भूत्वा पर्वतचरो भूत्वा दीनं यथा स्यात्तथा
अरोदीत् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

हे वृक्षाः यूयं पर्वतस्थाः । उच्चस्थैः सर्वं दृश्यत इति ध्वनितम्

शोकशुक्रेण दग्धः । बिम्बोष्ठी चारुनेत्री सुविपुलजघना बद्धनागेन्द्रकाञ्ची हा सीता केन नीता मम हृदयगता को भवान्केन दृष्टा ॥ १० ॥

हे गोदावरि पुण्यवारिपुलिने सीता न दृष्टा त्वया साऽऽहर्तुं कमलानि चागतवती याता विनोदाय वा । इत्येवं प्रतिपादपं प्रतिनगं प्रत्यापगं प्रत्यगं प्रत्येणं प्रतिबर्हिणं तत इतस्तां मैथिलीं याचते ११

( पुनर्लक्ष्मणमासाद्य वैक्लव्यं नाटयति )

के यूयं वद नाथनाथ किमिदं दासोऽस्मि ते लक्ष्मणः कोऽहं वत्स स आर्य एव भगवानार्यः स को राघवः ।

केनापि सीता नीता हृता वा । भवतां मध्ये केनापि दृष्टा ? । कीदृशा यूयम् । गिरिगहनलतावायुना नीज्यमानाः । एतेन वायुवशात्तत्रस्थाऽपि सीता भवद्भिर्ज्ञायत एवेत्युक्तम् । इत्युक्ते वृक्षा ऊचुः—भवान्कः ? । राघव आह—अहं रामः । शोक एव शुक्रोऽग्निस्तेन दग्धः । ' सप्तार्चिर्दमुनाः शुक्रः ' इत्यमरः । तर्हि कीदृशी सीतेत्यपेक्षायामाह—बिम्बोष्ठीत्यादि । बद्धा नागेन्द्रस्येव काञ्चिर्यया सा । यद्वा बद्धा नागेन्द्रस्य काञ्चिर्यया सा । ' करिकुम्भमणिस्तोमनानारत्नोत्करेधिता ॥ मध्ये कुम्भाकृतिः स्वर्णा सा नागेन्द्राख्यया मता ' इति ॥ १० ॥

ततोऽवतीर्य गोदावरीमासाद्याह—हे गोदावरि, त्वया सीता न दृष्टा । कमलान्याहर्तुमागतवती रम्यवारिपुलिने विनोदाय वा आगता । इत्यनेन प्रकारेण । एवं यथा गोदावरी पृष्टा तथैव प्रतिपादपं पादपं पादपं प्रति जानकीं याचते स्म । इति सर्वत्र युज्यते । आपगा नदी । अगो गिरिः । एणो मृगः ॥ ११ ॥

वद यूयं के । एकवचने बहुवचनं वैक्लव्यादेव । तत्र लक्ष्मणः—हे नाथनाथ, आदरे वीप्सा संभ्रमे वा । यद्वा हे नाथनाथ, नाथाः

किं कुर्मो विजने वने तत इतो देवी समुद्वीक्ष्यते
का देवी जनकाधिराजतनया हाहा प्रिये जानकि ।

सौमित्रिणा सह रामः अत्रान्तरे वनान्तं पर्यटञ्जनकतनयातापिनः पापिनो रजनिचरपतेर्भुजभुजङ्गमण्डलीखण्डितोरगवधूवैधव्यधातारं विपक्षरक्षसा निहतं घोरसमरमूर्छितं पक्षिराजं जटायुषं भग्नं च रावणरथमालोक्य—

ज्ञात्वा दशरथस्यैनं मित्रं शत्रुनिषूदनम् ।
हा तात किमिदं नाम रामः पक्षीन्द्रमब्रवीत् ॥१३॥

जटायुः—

अर्धरात्रे दिनस्यार्धे अर्धचंद्रेऽर्धभास्करे ।
रावणेन हृता सीताऽकृष्णपक्षे सिताष्टमी ॥ १४

ब्रह्मादयस्तेषामपि नाथ स्वामिन्, इदं वैक्लव्यं किम्। अहं ते दासः लक्ष्मणोऽस्मि । हे वत्स, अहं कः । लक्ष्मणः—स इति प्रसिद्धः आर्य एव भगवानचिन्त्यैश्वर्यः । रामः—स आर्यः कः । लक्ष्मणः—राघव रघुवंशजन्मा । रामः—अत्र विजने जनशून्ये वने किं कुर्मः ? । लक्ष्मणः—इतस्ततो देवी समावीक्ष्यते । रामः—देवी का ? । लक्ष्मणः जनकाधिराजतनया। रामः—हा कष्टं हे प्रिये हे जानकि! । विषमोऽयमलंकारः । उक्तं च वीरभानौ—' उक्तिप्रयुक्तिचातुर्यान्निबद्धो विषमो मतः ' इति ॥ १२ ॥

इदं तव किं जातम् ? ॥ १३ ॥

अर्धेति । दिनस्यार्धे देवदिनस्यार्धे सति, तेन चैत्र उक्तः । मकरादिषट् दिनं, कर्कादिषट् निशेति श्रीपतिः । ' मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ' इत्यमरः । तत्राप्यर्धरात्रे सति पितृणामर्धरात्रे सति, अकृष्णपक्षे पितृणां पाक्षिकी रात्रिर्भवति । तदर्धे

(यत्रेति वाक्यशेषः) रामः—
भग्नोऽयं कथमस्ति रावणरथस्तातेन वज्राङ्कुर-
क्रूरावस्करणेन भङ्गुरलसत्कोटित्रुटज्ज्यं धनुः ।
हे सीरध्वजराजपुत्रि स तथा दृष्टस्त्वया धन्यया
पक्षीन्द्रो दशकण्ठकुञ्जरशिरःसंचारिपञ्चाननः १९

पक्षार्धे सति कस्य पक्षस्येत्यपेक्षायामाह—कीदृशे अर्धरात्रे । अकृष्णपक्षे अकृष्णः शुक्लः पक्षो यस्मिन् । एतेन चैत्रशुक्लपक्षो द्योतितः । पुनः कीदृशे अर्धरात्रे । अर्धः अष्टकलश्चन्द्रो यस्मिन् । तत्रापि कस्यां तिथौ हृतेत्यपेक्षायामाह—यत्र यस्मिन्दिने सिताष्टमी सितेन शुक्रेण युता अष्टमी । मध्यमपदलोपी समासः । तत्रापि कस्यां वेलायामित्यपेक्षायामाह—कस्मिन्सति । अर्धभास्करे सति मध्यंदिनवर्तिन्यादित्ये सति । सर्वपदैश्चैवमुक्तं भवति । चैत्रशुक्लपक्षसिताष्टमीमध्याह्ने सीता हृतेति । केचिदेवं व्याकुर्वन्ति—कृष्णपक्षे सीता हृता 'कृष्णोऽस्त्री माघकृष्णयोः' इति चरकः । कीदृशे कृष्णपक्षे । पितॄणामर्धरात्रे शुक्लपक्षः पितॄणां रात्रिः । पुनः किंभूते । दृष्टः माघस्नाननिमित्तं अर्धभास्करो यस्मिन् । 'अर्धोदिते रवौ स्नातो माघे स्वर्गमितो भवेत्' । अन्यत्पूर्ववत् । एतदर्थेन एवमुक्तं भवति । माघशुक्लपक्षसिताष्टमीमध्याह्ने सीता हृतेति । उक्तं च वाराहपुराणे—'चैत्रमासासिताष्टम्यां मुहूर्ते वृन्दसंज्ञिते ॥ राघवस्य प्रियां सीतां जहार दशकन्धरः' इति वृन्दः । पूर्वाह्ण इति धरणिः ॥ १४ ॥

भग्नोऽयमिति । वज्राङ्कुरवद्वज्रधारावत्क्रूरं दुःसहं यदवस्करणं तुण्डेनोद्भिद्याकर्षणं तेन भङ्गुरे वक्रे लसन्त्यौ ये कोटी धनुष अग्रभागौ ताभ्यां सकाशात्त्रुटन्ती ज्या यस्य तद्धनुरपि कथं भग्नमितीत्युक्त्वा पुनः दृष्टवत्सीतामाह—हे सीते, धन्यया त्वया स पक्षीन्द्रो जटायुः तथा युध्यमानो दृष्टः । धार्मिकदर्शनाद्धन्यत्वम् । यो दशकण्ठ एव कुञ्जरस्तच्छिरःसु संचरणशीलः सिंह इति ॥ १९ ॥

तात त्वं निजतेजसैव गमितः स्वर्गं व्रज स्वस्ति ते
ब्रूमस्त्वेकमिमां वधूहृतिकथां तातान्तिके मा कृथ
रामोऽहं यदि तद्दिनैः कतिपयैर्व्रीडानमत्कन्धरः
सार्धं बन्धुजनेन सेन्द्रविजयी वक्ता स्वयं रावणः

रामः—

वनेचरान्मृगान्विलोक्य "आः खलु दुरात्म
नाममीषां रूपेण मारीचिना प्रपञ्चमवलम्ब्य
प्राणवल्लभाश्लेषतो विश्लेषितोऽहमिति अ
पुनः मृगीचक्रवधेन कुरङ्गाणां प्रियाविरहमु
त्पादयामि" इति विचार्य—

अमोघाः कृष्टनालीकाः काननेषु मृगीवधे।
रामः किं दूरघातीति सीतानयनशङ्कया ॥ १

सीताहृतिं दशरथं मा श्रावयेति लज्जया वारयति—हे तात, त्वं
जतेजसैव निजदर्पेणैव स्वर्गं गमितः प्रापितः व्रज। ते स्वस्ति। स
मोक्षोऽस्तु। परंतु एकं निरुपमं त्वां प्रति ब्रूमः। किं तदित्याह-
मिति। बन्धुजनेन कुम्भकर्णादिना। इन्द्रविजयी मेघनादस्तेन सहि
वक्ता शीघ्रं वदिष्यतीति ॥ १६ ॥

'आस्तु स्यात्कोपपीडयोः' इत्यमरः। अमोघा इति। का
मृगीवधे मृगीवधनिमित्तं कृष्टा आकृष्टा ये नालीका बाणाः।
रामस्य तेऽमोघाः सफलाः। 'नालीकशरमार्गणाः' इति वि
दूरान्न हननमिति चेत्तत्राह—दूरघाती दूरादेव हन्तुं शील
रामस्यास्तीति बाणसफलत्वदूरघातित्वयोः सतोरपि सीतान
ङ्कया इमे नेत्रे सीतायाः नयने भवत इति तन्नेत्रसादृश्यमा
सां नेत्रे तिष्ठतीति तद्धनने स्वीयापराधः स्यादिति शङ्कया।
किम्। प्राप्तदयावानभूदित्यर्थः। इतिशब्देन दया किंशब्देन प्र
रिति। 'समाप्तौ च परिच्छेदे दयायामिति संमतम्' इति ध

ततः कथमपि भगवति भास्करेऽस्ताचलाव-
लम्बिनि प्रलयकालोदितप्रचण्डमार्तण्डमण्डलमि-
वोदितं चन्द्रमण्डलं तरुणकोपारुणदारुणं तरणि-
नन्दनमिवावलोक्य रामः—

सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते,
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति ।,
वत्सैतद्भवता कथं नु विदितं, धत्ते कुरङ्गं यतः,
क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥१८॥

रामश्चन्द्रमधिक्षिपति—

मन्दरेण मथितोऽसि न पापिञ्ज्वालितोऽसि
तमसा न दुरात्मन् । त्वां शरेण शतधा
परिनिन्ये जानकीमुखसमो यदि न स्याः ॥ १९ ॥

'निन्दने च वितर्के च प्राप्तौ प्रश्ने किमप्ययम्' इति विश्वः । श-
ङ्कोक्ता रसोदधौ—'स्वीयापराधचौर्यादितो मता शङ्का' इति ॥ १७ ॥

'वियोगिपापिविरहिजीवेषु तरुणोऽस्त्रियाम्' इति चरकः । बला-
त्तरुणेषु वियोगिषु यः कोपस्तेनारुणं चन्द्रमण्डलं, यद्वा तरुणेषु
पापिजनेषु यः कोपस्तेनारुणं तरणिनन्दनं यममिवेति ।

कुरङ्गनयननिभे चञ्चले नयने यस्याः सा।मध्यमपदलोपी समासः।
उक्तिप्रत्युक्त्यार्थज्ञानं विषमोऽयमलंकारः । तल्लक्षणं पूर्वमुक्तम् ॥ १८॥

मन्दरेणेति । हे पापिन्परसंतापदातः, मन्दरेण गिरिणा अब्धि-
मन्थने न मथितोसि न चूर्णीकृतः ?। ततोऽपि तमसा । राहुणापि न
ज्वालितः ? । क्रोधाग्निना न दग्धः ? । 'तमस्तु राहुः स्वर्भानुः'
इत्यमरः । स्वाशक्तौ मोहिनीसूचनेनापि दुरात्मन्नित्युक्तम् । ताभ्यां
परिमुक्तमपि त्वां अहमेव शतधा शतप्रकारं परिनिन्ये प्रापयामि ।
यदि त्वं जानकीमुखसमो न स्याः । अत्रोन्मादावस्थान्तरङ्गवा-
चिकव्यथोदिताऽयासो दर्शितः । तदुक्तं रसोदधौ—'स्यादुन्मादः

अपि च लक्ष्मणं प्रति—

सौमित्रे दाववह्निस्तरुशिखरगतो वार्यतां निर्झरौघैः
का वार्ता दाववह्नेरयमुदयगिरेरुज्जिहीते हिमांशुः।
धत्ते धूमं हिमांशुः कथय कथमयं नैव धूमो धरण्या-
श्छायेयं संगताभूदयि धरणिसुते कुत्र कान्तेसि सीते॥

रामः सकरुणं आत्मनि प्राणवल्लभायाः परमप्रेमाणमधिगम्य--

शङ्के शशाङ्के जगुरङ्कमेके पङ्कं कुरङ्गं
प्रतिबिम्बिताङ्गम्। धूमं च भूमण्डल-
मुद्धताग्नेर्वियोगजातस्य मम प्रियायाः॥ २१

रे रे निर्दय दुर्निवार मदन प्रोत्फुल्लपङ्केरुहान्
बाणान्त्संवृणु संवृणु त्यज धनुः किं पौरुषं मांप्रति

कान्ताचित्तव्यथागोचरायासः । कायिकवाचिकभेदाद्द्विधोदितो व्यथोदितायासः ॥ तत्समं द्रव्यं दृष्ट्वा यदुपालम्भः स वाचिकाल इति । तत्समं द्रव्यं मुखादि सदृशं चन्द्रादि ॥ १९ ॥

अत्राप्युक्तिप्रत्युक्तिः । वार्यतां शाम्यताम् । उज्जिहीते उदयं चन्द्रे श्यामत्वमालक्ष्याह—धूममिति । अयि इति कोमलामन्त्रणे ॥२०

आत्मनि हृदये ।

एके कवयः शशाङ्के चन्द्रे अङ्कं जगुः । 'अङ्कं पदे ल च' हरशिरःस्थानं तदभावादनुज्ज्वलत्वं । एके पङ्कं योगिदुःखदातृत्वजन्यपापं श्याममेव । 'अस्त्री पङ्कं पुमान्पाप' इत्यमरः । एके अस्मिन्नेव प्रतिबिम्बिताङ्गं कुरङ्गमेतं चन्द्रवा मृगं जगुः मृगप्रतिबिम्बमिति । चशब्दात्पुनर्ग्रहणं प्रतिबिम्बित भूमण्डलं जगुः उक्तवन्तः । उक्ताक्षेपोयमिति । अहं तु प्रिया सीतायाः सकाशादुद्यतो योऽग्निस्तस्य धूमं शङ्के मन्ये । कीदृशं द्धताग्नेः । मम वियोगजातस्य ॥ २१ ॥

अथ सीतास्मरणादुच्छ्रितं काममाक्षिपति—रेरे इति । रेरे नि

कान्तासङ्गवियोगजातहुतभुग्ज्वालाप्रदग्धं वपुः
शूराणां मृतमारणे नहि वरो धर्मः प्रयुक्तो बुधैः॥२२॥

अथवा—

आपुङ्खाग्रममी शरा मनसि मे मग्नाः समं पञ्च ते
निर्दग्धं मदनाग्निना वपुरिदं तैरेव सार्धं पुनः।
कष्टं काम निरायुधोऽसि भवता जेतुं न शक्यो जनो
दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु२३

तत्रापि क्षणं विकसिताशोकतरुतले विश्रा-
म्याह स्म दाशरथिः

कृत्यज्ञानहीन भो दुर्निवार दुराग्रह मदन ! पङ्केरुहानेव वा-
णान् संवृणु संवृणु उपसंहरेति संभ्रमे वीप्सा। नमेत्यध्याहारः।
वपुः कान्तासङ्गस्य यो वियोगः तेन जातो यो हुतभुक् अग्निस्तस्य
ज्वालाभिः प्रदग्धमस्तीति । अन्यत्सुगमम् ॥ २२ ॥

काममन्यथामनुभूयान्यवियोगिनोऽनुकम्पयन्निवाह—आपुङ्खाग्रमिति।
अथवा मां प्रहर बाणान्मा संवृणु । हे काम, तेऽमी
पञ्चैव बाणाः क्षोभनमोहनशोषणविद्रावणनिलायनशीलाः एते
आपुङ्खाग्रं यथा स्यात्तथा सममेकदैव मम मनसि हृदये मग्नाः
सन्ति । इदं मदीयं वपुस्ते तव बाणैः सार्धं मदनाग्निना निर्दग्धं
दग्धपटवज्जातम् । यद्वा मदनेति संबुद्धिः । अग्निना वियो-
गाग्निना जातं पूर्वं यज्जितं तज्जितमेव । पुनरपि अधुना हे काम,
भवता जनो लोकः जेतुं शक्यो न । यतस्त्वं निरायुधोसि दग्धबा-
णत्वादन्यास्त्राभावाच्च कष्टं यथा स्यात्तथा एक एवाहं दुःखी
स्यां त्वद्बाणशल्यमरणत्वात् । अन्यो लोकः सुखं जीवतु त्वदा-
तङ्काभावात् ॥ २३ ॥

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयो
स्तुल्यं सर्वमशोक केवलमहं धात्रा सशोकः कृतः॥२४॥

पुनरपि प्रलपति—

हारो नारोपितः कण्ठे मया विश्लेषभीरुणा।
इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः॥ २५॥
चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते
माल्यं सूचिकुलायते मलयजो लेपः स्फुलिङ्गायते।
रात्रिः कल्पशतायते विधिवशात्प्राणोऽपि भारायते
हा हन्त प्रमदावियोगसमयः संहारकालायते॥२६॥

हे अशोकवृक्ष, आवयोः सर्वं वृत्तं तुल्यं, परंतु एतन्म द्वैलक्षण्यम्। यत्त्वं अशोकः अहं धात्रा केनापि दुरदृष्टेन सशोकः कृतः प्रियाविरहितत्वात्। तुल्यत्वमेव द्योतयति–शिलीमुखाः भ्रमराः बाणा अपि वा। स्मरधनुर्मुक्ताः पुष्पेभ्यो निर्मुक्ताः पुष्पधन्वा उभयथा ग्राह्यः। अशोकः स्त्रीपादस्पर्शादलं विकसतीति श्रुतिः। रामेपि पादतलाहतिः पद्माख्यबन्धाभिप्रायेण तदुक्तं कमावतारे–' धृतैकपादा जघने कुर्वन्त्यन्यपदाहतिम् शनैः शनैर्निधुवने पद्मबन्धस्तदा मतः' इति॥ २४॥

सुगमम्। एतेन दैवस्य दुर्लङ्घ्यत्वमुक्तम्॥ २५॥

चण्डकरो रविः तद्वदाचरति। सूची वस्त्रवेधनलोहस्तद्वत् वदाचरति। ' स्फुलिङ्गोऽग्निकणः पुमान् ' इति विश्वः। एतत्सर्वं कुट्टमितं द्योतितम्। तदुक्तं रसोदधौ–' शशिपाटीरालेपं प्र जयाम्यानिलादिरुपयाति॥ सर्वं दुःखवदेतत्कुट्टमितं तत्र संभवति इति॥ २६॥

**मांसं कार्श्याद्भिगतिमपां बिन्दवो बाष्पपातात्**
**तेजः कान्तापहरणवशाद्वायवः श्वासदैर्घ्यात् ।**
**इत्थं नष्टं विरहवपुषस्तन्मयत्वाच्च शून्यं**
**जीवत्येवं कुलिशकठिनो रामचन्द्रः किमेतत् ॥ २७ ॥**

तद्विरहे प्राणधारणादावात्मनि काठिन्यं प्रारब्धावश्यभोगत्वं दर्शयति—मांसमिति । इत्थमुक्तप्रकारेण विरहवपुषः तस्मात्सकाशात्सर्वं तत्त्वजातं नष्टम् । एवं तत्त्वाभावेऽपि सति रामचन्द्रो जीवति । यतः कुलिशकठिनः वज्रवत्कठिनहृदयः एतत्किमत्याश्चर्यम् । एतेन प्रारब्धावश्यभोगत्वं दर्शितम् । तत्त्वनिर्गमप्रकारमाह—अभिनवं स्वसहचरं मांसं नष्टमभूत् । अविरलबाष्पपातादपां बिन्दवोऽपि नष्टाः । कान्तापहरणवशात्तेजो नष्टं तेजोनाशः । श्वासदैर्घ्याद्वायवो नष्टाः । तन्मयत्वात्सीतागतान्तरत्वात् शून्यं आकाशनाशः । उक्तं च सिद्धान्तमुक्तावल्याम्—'तस्मिन्यत्कठिनत्वं सा भूस्तज्जलं यद्द्रवात्मकम् । तजो भवेद्यदुष्णं तत्संचरेद्यः स मारुतः । सुषिरं यत्तदाकाशमिति पञ्चात्मकं वपुः' इति । कारणाभावात्कार्यस्याप्यभाव इति न्यायादेतत्कार्येन्द्रियगणोऽपि नष्ट इति । उक्तं च तत्रैव—'श्रवणौ व्योमतो वायोस्त्वङ् नेत्रे तेजसो जलात् ॥ रसना भूमितो घ्राणमिति पञ्चेन्द्रियोद्भवः' । इति ग्राहकाभावे ग्राह्यस्याप्यभाव इति न्यायादिन्द्रियग्राह्यविषयाणामप्यभावः । एतेन वाय्वादिपञ्चकं इन्द्रियपञ्चकं विषयपञ्चकं च नष्टमिति ध्वनितम् । कर्मेन्द्रियाणां लयो वायावेव तेषां प्राणशक्तिमत्त्वात् । मनोबुद्धिचित्ताहंकाराणां पृथिव्यप्तेजोवायूनां सात्त्विकांशेभ्यो जातानामतस्तेषां पृथिव्यादिष्वेवान्तर्भावस्तदभावे तेषामप्यभावः । अतश्चतुर्विंशतितत्त्वविगमेऽपि यज्जीवति तदाश्चर्यमिति ॥ २७ ॥

सलक्ष्मणो रामः—

एवं दैवयोगाद्गौरगवयगजभुजङ्गशरभशार्दूलकोलबहुलकोलाहलाहूतभूतवेतालसमुत्तालकालकरालचक्रवालकण्ठनालप्रोच्छलत्तुमुलघोरचीत्कारमिलितबहलान्धकारकलितगह्वरान्तरालविलसदविरलसरलपरिमलबहलचञ्चलगलद्विमलमकरन्दबिन्दुकीलालजालपिच्छिलालवाललुलितप्रमत्तालिमालमन्दानिलान्दोलवाचालदरदलितललितमाकन्दवृन्दबकुलमुकुलधूलिजालखेलत्कोकिलकुलविलासिनीकोमलालापनिखिलगिरिशिखरशिखिलास्यलीलाकलापसानुकूललोलद्गोलाङ्गूलचञ्चच्चकोरचक्रमञ्जुगुञ्जद्वृक्षपक्षिणीपक्षवृद्धिम् ।

पद्याटवीवर्णनादपूर्तिं मन्यमानः कविर्गद्यत्रयं वर्णयति—ए[वं] मित्यादिना । अत्र श्लोकचतुष्टयस्यैक एव योगः । एवं दैवयो[गाद]टवीमटन्महावराहस्कन्धारूढं वामतो विलोक्याह—स्मराम [इ]अग्रिमश्लोकेनान्वयः । कीदृशी अटवी । एवं पूर्वरीत्या दैव[यो]गाद्विधिवशाद्भुजङ्गश्चित्रमृगः ' भुजङ्गौ सर्पचित्तलौ ' इति [हरा]णिः । शरभोऽष्टापदः कोलो वराहः 'वराहः सूकरो घृष्टिः कोलः [पो]किरिः किटिः ' इत्यमरः । गवयादिकोलान्तानां कोलाहलेना[हूता] ये भूता वेतालाश्च रुद्रगणभेदास्तेषां समुत्तालाः ये कालक[रा]लाः भयङ्कराश्चक्रवालानि मण्डलानि । ' चक्रवालं तु मण्डलम्' इत्यमरः । समूहा इत्यर्थः । तेषां कण्ठनालेभ्यः प्रोच्छल[त्प्र]कटीभवत्तुमुलो व्यक्तो घोरचीत्कारस्तस्मान्मिलितो यो बहला[न्ध]कारस्तेन कलिता वेष्टिता ये गह्वराणामन्तराला मध्यप्रदेशास्ते[षु] विलसत् योऽविरलः सरलपरिमलः बहुतरसरलवृक्षगन्धः तद्[बहु]

गगनचुम्बनबद्धलक्ष्यविपुलफलाभाराव-
लम्बनालम्बितानन्तजन्तुसंतोषपोषनिर्दोषभूष-
णाध्युषितनिःशेषसविशेषामृतवर्षस्पर्धिव-
र्धिष्णुरसरसालप्रियालहिन्तालतमालकृत-
मालविशालशाल्मलमालूरशल्लकीशिरीषा-
सनशमीशाकशिंशपाशोकचम्पकसुरदारुको-
विदारकर्णिकारसिन्दुवारबहुसारनिम्बजम्बू-
दुम्बरकदम्बकरञ्जसौभाञ्जनबकुलनिचुलकरु-
खर्जूरबीजपूरजम्बीरभाण्डारवानीरकाश्मी-
रनारङ्गकर्मरङ्गकदलीचन्दनालिङ्गितालवलीं-

ये वहुला वहुतरा गलन्तः स्वच्छमकरन्दविन्दवस्त एव कीलालजालं जलपूरम् ' पयः कीलालममृतम् ' इत्यमरः । तेन पिच्छिला पूर्णा ये आलवाला वृक्षमूलगर्ताः तत्र लुलिता लुब्धा ये मत्ता अलयो मत्तभ्रमरास्तेषां मालाः पङ्क्तयः एताभिश्च परं मन्दानिलान्दोलनेन वाचालानि शब्दितानि दरं दलितानि फुल्लानि ललितानि यानि वकुलमुकुलानि तेषु खेलन्त्यो याः कोकिलकुलविलासिन्यस्तासां कोमलालापेन निखिलानि पूर्णानि वृक्षशिखराणि तेषु मयूरनर्त-नलीलासमूहस्तस्य सानुकूलनर्तनोत्साहहेतव इतस्ततश्चलन्तश्चको-रास्तेषां चक्रेण युक्तं यथा स्यात्तथा गुञ्जन्त्यो याः वृक्षस्थाः पक्षिण्यस्तासां पक्षस्य आत्मवर्गस्य वृद्धिर्यस्यां तामटवीमटन्नित्यग्रिमेणान्वयः ।

पुनरपि अटवीमेव वर्णयति—पुनः किंविशिष्टामटवीम् । गगन-चुम्बने आकाशावलोकने बद्धं लक्ष्यं यैस्ते उन्नतवृक्षास्तेषां ये विपुलाः फलभारास्त एवालम्बनं तत्रावलम्बिता ये अनन्ता जन्त-वस्तेषां संतोषपोष एव निर्दोषभूषणं येषां तेष्वध्युषितः स्थितो यो निःशेषः पूर्णः सविशेषो विविधस्वादुरमृतवर्षस्पर्धी अमृता-दपि रमणीयो वर्धिष्णुः प्रतिदिनं वर्धमानो यो रसस्तद्युक्ता ये रसालादयस्तैर्दुस्तराम् ' राजादनः प्रियालः स्यात् ' इत्यमरः ।

धात्रीवटकुटजपाटकाङ्कोलकङ्कोलचोलभल्ला-
तकबिभीतकहरीतक्याम्रातककेतककङ्कतवैक-
ङ्कतमधूकबन्धूकजयन्तीजपाश्वत्थकपित्थति-
न्तिणीनागकेसरादिदुस्तरामरण्यानीं पर्यट-
न्महावराहस्कन्धारूढमुत्कटं रटन्तं करटं वा-
मतो विलोक्य ।

दक्षिणतस्तु दक्षिणाचलप्रचलितमलयमाल-
तीमरुचकलवङ्गकङ्कोलदमनकजातीतगरशत-
पत्रादिकमलमुकुलमुकुन्दिनीकह्लारपरिमल-
मिलितचुम्बितताम्रपर्णीकावेरीतुङ्गभद्रासा-
न्द्रगम्भीरनीरधारातरङ्गपरिपीतमैत्रावरुण-
तरुणीलङ्काशशाङ्करुद्रपादाद्रिसरलसिंहल-
सालकश्रीगोपालकौ पाण्ड्यमण्डलगिरिप्र-

हिंतालो हिंगोटकः । कृतमालः कर्णाचलः । मालूरो बिल्वः कोविदारश्चमारिकः । सिंदुवारः बहुसारः सप्तपर्णः । ' सौभाञ्ज शिग्रतीक्ष्णगन्धकाक्षीवमोचकाः ' इत्यमरः । ' निचुलो हिज्ज म्बुजः । मञ्जिष्ठा रोमरङ्गोत्री कर्मरङ्गोगरुः पुमान् ' इति धरणि: अम्रातकोऽम्लवेतः । वैकङ्कतः कङ्कतिकः । उत्कटं यथा स्यात्त रटन्तं करटं काकं वामतो वामभागे ।'काके तु करकारिष्ट' इत्यमरः

रामः सविस्मयं यथा स्यात्तथा दक्षिणभागे खञ्जनमवलोक्य सानन्दं यथा स्यात्तथा अभवदिति शोकभञ्जनं काकदर्शनाद्दु भहरं च । पुनः । वामेनाक्ष्णा काकं दृष्ट्वा सबाष्पं सकरुणं च यथा स्यात्तथा सीदतीत्यन्वयः । कीदृशं खञ्जनम् । एवंभूतसर्पफणामध्ये क्रीडन्तम् । दक्षिणाचलेभ्यः प्रचालिताः प्रसारिता ये मलयसंबन्धि नो मालत्यादयस्तेषां यः परिमलस्तस्य मीलनमेकीभावस्तेन चुम्बि ता युक्ता या कावेर्यादिनद्यस्तासां सान्द्रा गभीराश्च या नीर धारास्तासां तरङ्गैः परिपीता मैत्रावरुणस्यागस्त्यस्य तरुणी कान्ता

वालचोलकुन्तलकेरलपुन्नाटककर्णाटककरहा-
टविदग्धान्ध्रकामिनीनीरन्ध्रपीनस्तनवदनघ-
नजघनदोर्मूलधम्मिल्लभारान्तराधिष्ठितश्री-
खण्डागरुकर्पूरमृगमदकुङ्कुमस्तोमसंभूतयक्ष
कर्दमाविमर्दवर्धितविविधगन्धकुसुमबहुलप-
रिमलोद्गारिमारुताशनोत्थितक्षीरनीहार-
काश्मीरस्फटिकशुद्धशङ्खकर्पूरकुन्दावदातम-
हाभुजङ्गस्फीतफूत्कारप्रफुल्लफणामणौ क्री-
डन्तं शोकभञ्जनं खञ्जनं चावलोक्य वामेना-
क्ष्णा सकरुणं सबाष्पं च दक्षिणेन सविस्मयं
सानन्दमभवदिति।

काकः कपोलस्थलसंस्थितो मे
कोलस्य वामे व्यसनं सदौस्थ्यम्।
राज्यं भुजङ्गस्य फणाधिरूढो
व्यनक्त्यहो दक्षिणखञ्जरीटः॥ २८॥

सा च लङ्कापर्यन्तदेशविशेषाणां कामिन्यश्च तासां नीरन्ध्रपी-नस्तनादिभारान्तरालेषु अधिष्ठितो यः श्रीखण्डादिसंभूतयक्षकर्द-मस्तेन विमर्दः संमर्दस्तस्माद्विवर्धितो यो विविधगन्धश्चासौ कुसु-मानां बहुपरिमलश्च तयोः समुद्गारी प्रक्षेपको यः मारुत एवाशनं भोजनं यस्य स चासौ उत्थितः अर्धोदयश्चासौ क्षीरनीहारका-श्मीरस्फटिकशुद्धशङ्खकर्पूरकुन्दावदातः श्वेतोज्ज्वलश्चासौ महा-भुजङ्गश्च तस्य स्फीताः ये फूत्काराः तैः प्रफुल्ला या फणा तस्याः मणौ शिखरे क्रीडन्तम्।

कोलस्य वराहस्य कपोलस्थलसंस्थितः स्कन्धमवलम्बितः सदौ-स्थ्यं समनोनवस्थानम्। अहो एतदाश्चर्यमेकदैवार्थद्वयसूचकशकुनत्वात्। दुस्थितस्य भावो दौस्थ्यं तेन सह वर्तमानम्॥ २८॥

क्षणं विचिन्त्य विश्राम्य च सबाष्पम्—

भो भो भुजङ्ग तरुपल्लवलोलजिह्व
बन्धूकपुष्पवर शोभितपुष्कराक्ष ।
पृच्छामि ते पवनभोजन कोमलाङ्गी
काचित्त्वया शरदचन्द्रमुखी न दृष्टा ॥ २९ ॥

भुजङ्गमः सुवाणीं कथयति—

गता गता चम्पकपुष्पवर्णा पीनस्तनी
कुङ्कुमचर्चिताङ्गी । आकाशगङ्गेव सुशी
तलाङ्गीनक्षत्रमध्ये इव चन्द्ररेखा ॥ ३० ॥

रामः—

व्यसनं किमतोऽप्यास्ते ज्ञातश्चाभ्युदयो मम ।
शरणं मरणं राज्यं मा पुनर्लक्ष्मणेऽस्तु तत् ॥ ३१
ततो वामं तिरस्कृत्य पुरस्कृत्य च दक्षिणम् ।
धन्यो वन्यशरण्यां तामरण्यानीं स्म गाहते ॥ ३२

किंच—

किष्किन्धाद्रौ रौद्ररुद्रावतारं
दृष्ट्वा रामो मारुतिं वाचमूचे ।
सीता नीता केनचित्क्वापि दृष्टा
हृष्टः कष्टं संहरन्प्राह वीरः ॥ ३३ ॥

॥ २९ ॥ ३० ॥

ममाभ्युदयो ज्ञात एव उपस्थितराज्यभङ्गात्तर्हि दुःखं भव
तत्राह—अतः सीतावियोगादपि अधिकं, व्यसनं किमास्ते ? न कि
पीति । मम तु मरणमेव शरणं चेत्पुना राज्यं स्यात्तर्हि लक्ष्मणे अस्
तद्व्यसनं लक्ष्मणे मास्तु ॥ ३१ ॥

वामं अशुभसूचकं काकं, दक्षिणं शुभसूचकं खञ्जरीटम् । 'महा
रण्यमरण्यानी ' इत्यमरः । ततो घनान्तरे भ्रमन्किष्किन्धाम
धिश्रित्य ॥ ३२ ॥

किष्किन्धा गुहा तद्युक्तोऽद्रिः किष्किन्धाद्रिस्तत्र रौद्ररसाश्रयो

पापेनाकृष्यमाणा रजनिचरवरेणाम्बरेण व्रजन्ती
किष्किन्धाद्रौ मुमोच प्रचुरमणिगणैर्भूषणान्य-
र्चितानि । हा राम प्राणनाथेत्यहह जहि रिपुं नय/
लक्ष्मणे नालपन्ती यानीमानीति तानि क्षिपति
रघुपुरः कापि रामाञ्जनेयः ॥ ३४ ॥

रामः [ सकरुणं सबाष्पम् ]—

जानक्या एव जानामि भूषणानीति नान्यथा ।
वत्स लक्ष्मण जानीषे पश्य त्वमपि तत्त्वतः ॥ ३५ ॥

लक्ष्मणः [ सबाष्पम् ]—

कुण्डले नैव जानामि नैव जानामि कङ्कणे ।
नूपुरावेव जानामि नित्यं पादाभिवन्दनात् ॥ ३६ ॥

रामः आभरणानि हृदये विन्यस्य गाढमालिङ्ग्य—

सर्वेषु सत्स्वपि तवाभरणेषु हारो
नारोपितो हृदि चिरं हृदयंगतोऽपि ।
मुक्तार्थसूत्रगुणवेधविशुद्धराशि-
स्तत्पङ्क्तिभेदफलदारुणमित्यरोदीत् ॥ ३७ ॥

रौद्रः एतादृशो यो रुद्रः तदवतारम् । भो मारुते, केनचित्पा-
पेन सीता नीता हृता । एतच्छ्रुत्वा हृष्टः यातरोषो हनुमान्रामं
कष्टं संपरिहरन्नाह ॥ ३३ ॥

पापेनेति । किष्किंधाद्रौ आञ्जनेयो हनूमानिति तान्याभर-
णानि रघुपतिपुरः चिक्षेप । तानि कानीत्याह । अम्बरेण आकाश-
मार्गेणाकृष्यमाणा कापि रामा यानि किष्किन्धाद्रौ मुमोच ॥३४॥

अन्यथा त्वं देहम् । तत्त्वतः सीतायाः सन्ति नवेति ॥३५॥३६॥

तावन्मात्रान्तरासहत्वान्नार्पितः । कीदृशो हारः । मुक्तार्थं मौक्ति-
कार्थं यः सूत्रगुणो दोरकस्तद्युक्ता ये वेधकाः छिद्राणि तत्र विशुद्धा
सा रत्नराशिः समूहो यस्य सः अतएव दुःखं पङ्क्तिभेदफलेन दारु-
णम् । इति रुरोदेत्यर्थः ॥ ३७ ॥

अहह जनकपुत्रीवक्त्रमुद्रामपश्यन्
व्रजति परमहंसो नाक्षमो वापि गन्तुम्।
तदुरुविरहवह्निज्वालया दग्धदेहः
किमुत पवनसूनो भूषणैस्तम्भितो मे ॥३८

हनुमान्सानुनयम्—

श्रीराम क्षोणिपाल त्यज निजदयिताशोकमेकः स लो
लंकेशं जेतुमीशो तमपि कपिपतेराज्ञयाऽहं हनूमान्
सुग्रीवस्याथ सार्धं गिरिमवतरणं पादविन्यासलक्ष्मी
निक्षेपादुत्पलाक्षक्षपितरिपुबलं दर्शनं त्वं च देहि ॥३९

ततो हनूमान्सहलक्ष्मणेन
रामेण सुग्रीवपुरः स्थितोऽभूत् ।
तांस्तत्र साक्षात्कपियूथनाथः
पापानि दग्धुं दहनं ददर्श ॥ ४० ॥

श्रुत्वा रामस्य कान्ताहरणमनिलजस्याननाद्वानरेन्द्रो
निःश्वस्यात्मीयमस्यानुवदति पुरतस्तद्बलाद्वालिनोऽ

पुनरपि स्वजीवनेऽपि विचिकित्सति—अहहेति खेदे । हे प
नसूनो, मे मम परमहंसः परमात्मा जीव एव हंसः एवं
विहाय न व्रजति तत्किम् ? । गमने हेतुमाह जनकपुत्रीति । सो
न्ततः त्वद्दत्तभूषणैस्ताम्भितः उत अथवा गन्तुमक्षमः । अत्र हेतुमाह
तदुरुविरहेति ॥ ३८ ॥

तमपि विश्वजयिनं सलोकं लङ्कावासिराक्षससहितं कपि
सुग्रीवस्य रावणस्तु हानिष्यत एव । अथवा तावत्त्वं सुग्रीवस्या
तरणं, अवतीर्यते यस्मिन्नित्यवतरणम् । वासस्थानगिरिं पादवि
न्यासलक्ष्मीनिक्षेपात्सार्थं विधेहीति । कीदृशं गिरिदर्शनात्त्वद
लोकनादेव निरस्तशत्रुपक्षम् ॥ ३९ ॥

रामेण सह । कीदृशेन रामेण । सह लक्ष्मणेन लक्ष्मणसहितेनेत्य
र्थः । तान्हनूमद्रामलक्ष्मणान्दक्षिणाग्निगार्हपत्याहवनीयान् ॥ ४० ॥
श्रुत्वेति । वानरेन्द्रः सुग्रीव अस्य रामस्य पुरतोऽग्रिमबला

हा नाथे विद्यमाने किमिति रघुपतिस्तं निहन्तुं प्रतिज्ञामारूढः प्रौढरोषानलबहलकलालंकृतोऽधिज्यधन्वा॥४१॥

सुग्रीवः—

नत्वा ससंभ्रममथो जगदेकवीर-
मालिङ्गयन्रघुपतिं शुशुभे कपीन्द्रः ।
तद्विस्मृतं पुनरिवाभ्यसते प्रियायाः
कंदर्पकेलिषु पुनर्द्रुतभाविनीषु ॥ ४२ ॥

अये मरुत्तनय कोऽसौ चतुर्णां ताटकान्तकः ?

मारुतिः—

ये चत्वारो दिनकरकुलक्षत्रसन्तानवल्ली
मालाम्लानस्तबकमधुपा जज्ञिरे राजपुत्राः ।
रामस्तेषामभवदमलस्ताटकाकालरात्रि-
प्रत्यूषोऽयं सुचरितकथाकन्दलीमूलकन्दः ॥४३॥

देव वालिनः सकाशात्तत्प्रसिद्धमात्मीयजायाहरणश्रवणं लक्षीकृत्य वदति रघुपतिः । तं वालिनम् । इति किम् । कान्तापहरणदुःखानुभावज्ञत्वात् । अन्यत्सुगमम् ॥ ४१ ॥

नत्वेति । ससंभ्रमं सादरं विस्मृतं चिरं वियोगात्तत्प्रियाया आलिङ्गने कृतप्रतिज्ञे रामे द्रुतभाविनीषु शीघ्रभाविनीषु । अन्यत्सुगमम् ॥ ४२ ॥

ये चत्वारो रामभरतलक्ष्मणशत्रुघ्नाख्या राजपुत्रा दशरथसुताः जज्ञिरे, तेषां चतुर्णां मध्ये रामस्ताटकैव कालरात्रिस्तस्याः प्रत्यूषोऽयं रामः । तद्धन्ताऽयमित्यर्थः । ननु स्त्रीवधात्सागाः किन्नेत्याह—अमल इति । अमलत्वे हेतुः—सुचरितं पुण्यार्थं चरितं तस्य कथा नानाविनोदपरिहारवाक्यैर्गुणकथा सैव कन्दली तस्याः मूलस्यापि कन्दः । छिन्नसरणशीलानि मूलानि तन्निदानमध्यो ग्रन्थिः कन्दः । यथा छिन्नापि कदली उत्पद्यते एवमाच्छिन्नोऽपि धर्मो यतः पुनः पुनरुत्पद्यते।

ततस्ततः

श्रुत्वा वाली तदनु महतीं राघवस्य प्रतिज्ञां
तालान्सप्तप्रकृतिकुटिलान्प्रेरयामासयोद्धुम्।
सौमित्रिस्तानकृत सरलान् शेषपृष्ठस्थमूलान्
भारेणांघ्रेरथ रघुपतिः संदधे दिव्यमस्त्रम् ॥४

लक्ष्मणः साशङ्कं रामं प्रति। देव ज्ञात्वा
बाणः प्रहन्तव्यः। यतः—

एकदैव शरेणैकेनैव भिन्नकलेवराः।
म्रियन्ते सप्त तालास्तं घ्नन्ति हन्तारमन्यथा ॥४

रामः सावज्ञम्—

माभैषीर्मयि सौमित्रे राघवेऽधिज्यधन्वनि।
सतां देहं परित्यज्य निर्जगामासतां भयम् ॥४

सर्वे कीदृशा इत्यपेक्षायामाह—दिनं करोतीति दिनकरस्तस्य
जातानां क्षत्रियाणां संतान एव वल्ली तस्या माला परंपरा
अम्लानस्तवकः पुष्पगुच्छः तेषां मधुपाः। रविवंशक्षत्रिययशोवल्
मधुपा इत्यर्थः ॥ ४३ ॥

अजेयानां हननकर्तृत्वान्महतीमित्युक्तम्। तालांस्तालवृक्षान्
दैत्यानेव। सौमित्रिः अंघ्रेर्भारेण चरणाङ्गुष्ठाविष्कृतभूभारेण सर
नकृत। अत्र हेतुः—शेषपृष्ठस्थानि मूलानि येषां ते तान् एतेनैव
भवति। कुण्डलीभूतदेहशेषपृष्ठस्थमूलत्वात् तेऽपि प्रकृतिकुटिला
कार्यं निदानं हि गुणं विधत्ते इत्युक्तत्वात्। चरणभारेण शेष
समाक्रमणात् सरलतया वृक्षा अपि सरला जाता इति सूचितम्
शेषं सुगमम् ॥ ४४ ॥

अन्यथा एकदैव सप्तानामपि हननाभावे तत्रापि एकै
बाणेन ॥ ४५ ॥

भयं सतां देहं त्यक्त्वाऽसतां देहं निर्जगामेति। अतः परदार
रणत्वाद्वालिनस्तत्र भयमिति भावः ॥ ४६ ॥

रामः करेण बाणमालभ्य—

भावोऽस्ति चेत्कुशिकनन्दनपादयोर्मे
यद्यस्म्यहं द्विजतिरस्कृतिरोषहीनः ।
नान्याङ्गनासु च मनः शर सप्त तालान्
भित्त्वा तदा प्रविश भूतलमप्यगाधम् ॥४७॥

एकेनैव शरेण बालकदलीकाण्डप्रभङ्गक्रमात्
कृत्तेषु प्रथमेषु दाशरथिना तालेषु सप्तस्वथ ।
अश्वाः सप्त जगन्ति सप्त मुनयः सप्ताब्धयः सप्त गाः
सत्यं सप्त च मातरो भयभृतः संख्या न साम्यादिह ४८.

रामबाणः सक्षोभम्—

बाणः प्रमाणमधिगम्य वसुंधरायाः
संबोधयन्निव भुजङ्गमभङ्गभीत्या ।
ब्रह्माणमम्बरचरान्विधुनोति पक्षान्
पुङ्खावशेष इति रामकराद्विमुक्तः ॥ ४९ ॥

पौरंदरिः सक्रोधम्—

श्रुत्वा हतान्समरमूर्धनि सप्त तालान्
रामेण पापहृदयेन विनाऽपराधम् ।

द्विजैः कृता या मे तिरस्कृतिस्तया यो रोषस्तेन हीनः । यद्वा द्विजानां तिरस्कृतिस्तेषु रोषश्च तद्रहितः ॥ ४७ ॥

सुगमम् । एते भयभृतः आसन्नित्यन्वयः । तानाह—अश्वा रवेः । सप्त गाः सप्त द्वीपाः । 'गकारो गगनद्वीपगणेषु च गणेऽपि च' इति संसारावर्तशब्दशासनः ॥ ४८ ॥

रामकराद्विमुक्तो बाणः पुङ्खावशेषः सन् इति पक्षान्विधुनोति कम्पयति । इतीति किम् । भुजङ्गमः शेषस्तद्भङ्गभयेन अम्बरचरं ब्रह्माणं बोधयन्निव ॥ ४९ ॥

विनापराधं हननमेव पापं तद्युक्तहृदयेन परकान्तापहरणत्वं

कोपानलज्वलितहृत्कमलोऽथ वाली
रङ्गावतारमगमद्गिरिचत्वरेषु ॥ ९० ॥

तारा सहर्षम्—

अवश्यं भगवतः श्रीपुरुषोत्तमस्य रामचन्द्रस्य प्रसादादद्य चिरविरहिणः प्राणवल्लभस्य सुग्रीवस्य वक्षःपीठे लुठिष्यामीति मन्यमाना गिरिवरशिखरमारुह्य रामपौरन्दरिसमरमाकाङ्क्षती चिन्तयामास—

तारा संत्यक्तहारा गिरिशिखरचरा स्रस्तधम्मिल्लभा
शोकाब्धिप्राप्तपारार्पितमदनशरा वीरसुग्रीवदाराः
नारा नाराचधारा निजरमणरता तापिनः पापिनोऽस्य
णान्छाणावतीर्णा हरतु कलिकलाशालिनो वालिनोऽ

रामः सक्षोभं पौरन्दरिं गिरिगरिमगरुभीरमहिमानमवलोक्य सौमित्रिमित्रमनुस्मृत्या ब्रवीत् । वत्स !—

किं वाली वानराली बहलकलकलाहूतदेवेन्द्रवज्रं
वाञ्छत्याकृष्ययोद्धुं शिवशिव तुमुलोत्कालसंचा-

वानराणामभेदत्वात् । यद्वा 'पापोऽस्त्री क्रोधपङ्कयोः' इति विश्वात् क्रोधयुक्तहृदयेनेत्यर्थः ॥ ९० ॥

तारेति । चिन्तयामासेति पूर्वेणान्वयः । इति किम् । अस्य वालिनः प्राणान् हरतु । कलिकला कलेरंशः पापं तेन राजमानस्य किलेति पाठे वानरजात्यनुकरणं किलकिलशब्दः । कीदृशी तारा स्रस्तः धम्मिल्लः केशबन्धनं यस्याः । नरो रामस्तस्यैषा नारा । रामस्य राणधारेत्यर्थः ॥ ९१ ॥

हे वत्स, एषः वाली केनायुधेन योद्धव्यः ? यद्वा केन वीरेण योद्धव्यः ? न केनापीति ध्वनिः । एषः कः । वानरपङ्क्तीनां बहले

लिताकः । प्रोद्यल्लाङ्गूलवल्लीशिखरकवलितं च-
ण्डदोर्दण्डकाण्ड भ्रान्तामूलाग्रशैलप्रहरणनिपुणः
केन योद्धव्य एषः ॥ ५२ ॥

रामः—सावष्टम्भं नारायणं बाणमादाय—
वेदोद्भवैर्द्विजगणेन पुराभिषिक्तो
मूर्ध्ना समं त्वमपि बाणगुणेन मन्त्रैः ।
तत्तेजसा परवधूजनहारिणस्त्वं
प्राणान्गृहाण समरेष्वतिदारुणस्य ॥ ५३ ॥

रामबाणः पौरन्दरिश्च ब्रह्मतेजोऽधिगम्य पर-
दारापहरणपराभवं च—
अथ रघुपतिबाणः प्राप्तवीरप्रमाणः
प्रलयदहनरोचिः कोटिविद्युन्मरीचिः ।
अकृत हृदयभेदं वालिनः सोऽप्यरोदी-
दनिहतपितृशत्रुः किं सशल्यो हतोऽस्मि ॥ ५४ ॥

यः कलकलः शब्दः तेन चाहूतो देवेन्द्रस्तस्य वज्रमाकृष्य आ-
दाय योद्धुं वाञ्छति । शिवशिवेति खेदे । कीदृगयम् । तुमुलोऽन्यैर-
लक्ष्यः उत्कालः कदनं तेन संचालितोऽर्को येन । किंभूतं वज्रम् ।
प्रकर्षेणोद्यन्ती या लांगूलवल्ली तस्याः शिखरेणाग्रभागेन कवलितं
गृहीतम् । किंभूतो वाली । चण्डः अजेयः दोर्दण्डो भुजदण्डस्त-
स्मिन्यः कोदण्डो बाणः तेन भ्रान्तो गर्वितः दोर्दण्डस्थबाणेन
जातगर्व इति । 'गर्वसंशययोर्भ्रमः' इति विश्वः । मूलं चाग्रं
शिखरं च मूलाग्रे ताभ्यां युतः शैलः मूलाग्रशैलस्तेन यत्प्रहरणं
तत्र निपुणः ॥ ५२ ॥

हे बाण, पुरा द्विजगणेन वेदोद्भवैर्मन्त्रैः गुणेन समं त्वं
मूर्धाभिषिक्तोऽसि । अतस्तत्तेजसा तेषां मन्त्राणां तेजसा । सुग-
मम् ॥ ५३ ॥

अथेति । प्राप्तवीरस्य वालिनः प्रकर्षेण मानमियत्ता येन सः ।

रामः सकरुणं सविषादं च—

वत्स सौमित्रे गिरिगह्वरेषु स्वयोनिविहितं महत्सुखमनुभवन्तं महावीरं अनपराधिनं वालिनं हत्वा मन्दभाग्यः कथमहं जानकी-सुखमनुभविष्यामीति शिरो धुन्वन्पौरन्दरिं व्याजहार—

शस्त्रौघप्रसरेण रावणिरसौ यो दुर्यशोभागिनं
चक्रे गौतमशापयन्त्रितभुजस्थेमानमाखण्डलम् ।
कक्षागर्तकुलीरतां गमयता वीर त्वया रावणं
तत्संमृष्टमहोविशल्यकरणी जागर्ति सत्पुत्रता ५५॥

वाली प्राणांस्त्यक्तुमिच्छन्—

सुग्रीवोऽपि क्षमः कर्तुं यत्कार्यं तव राघव ।
किमहं न क्षमः कस्मादपराधं विना हतः ॥ ५६ ॥

न निहतः पितुरिन्द्रस्य शत्रुः रावणो येन सः अत एव सशल्यो रावणहननमेव शल्यम् ॥ ९४ ॥

भोः कपे, यः रावणापत्यं मेघनादः शस्त्रौघप्रसारेण शस्त्रप्राताडम्बरेण आखण्डलमिन्द्रं दुर्यशोभागिनं चक्रे । रावणिना शक्रो जित इति दुर्यशः । हे वीर, तत् इन्द्रगतं दुर्यशो त्वया संमृष्टं उज्ज्वलीकृतम् । दूरीकृतमिति भावः । कथं दूरीकृतमित्यपेक्षायामाह—किंभूतेन त्वया । रावणं मेघनादपितरं कक्षैव गर्तस्तत्र कुलीरतां कर्कटतां गमयता । कीदृशमिन्द्रम् । गौतमशापेन यन्त्रितः बद्धः भुजस्थेमा भुजबलं यस्य तम् । 'प्राणस्थेमातरः ( ? ) पराक्रमद्युम्नातिशौर्यौजसी'इति हैमः । ननु तातदुर्यशः संमृष्टं मम तु रावणहननरूपं शल्यमस्त्येवेति चेन्न । असौ सत्पुत्रभाववानङ्गदः जागर्ति जीवत्येव । कीदृशी । विशल्यं कर्तुं शीलं यस्याः सा । अयमङ्गदो रावणं मत्सहायतया हनिष्यति । एतेन त्वं विशल्यो भवेति भावः; रावणपुत्रेण त्वत्पितेन्द्रो बद्धः इन्द्रपुत्रेण त्वया रावणो

रामः सबाष्पम्—

शुद्धिर्भविष्यति पुरन्दरनन्दन त्वं
मामेव चेदिह पातकिनं शयानम् ।
सौख्यार्थिनं निरपराधिनमाहनिष्य-
स्यस्मात्पुनर्जनकजाविरहोऽस्तु मा मे ॥ ५७॥

पौरन्दरिः—

तथेत्युक्त्वा पुनः स्वर्ग्या गतिस्ते न भविष्यति ।
यावत्त्वां न हनिष्यामि स्थास्यसि त्वं यमालये ॥५८॥

इति प्राणान्मुमोच । ह०

दासैरहो रघुपतिः परिभूयते किं
वैवस्वतादिभिरुवास तदालयेऽपि ।
यो देववाक्यमनतिक्रमयन्कियन्तं
कालं निहत्य पुरुहूतसुतं तु देवः ॥ ५९ ॥

रामः कथंचिद्विषादं परित्यज्य पौरुषमवलम्ब्य—

राज्ये सुग्रीवमादौ सदयितमभिषिच्या-
ङ्गदं यौवराज्ये रामः सेनाधिपत्ये सपवनत-
नयान्वानरेन्द्रान्प्रतस्थे । लङ्कां संत्यज्य शङ्कां
तदनु कपिभटैर्माल्यवत्युत्तमाद्रौ वर्षाकालं
गमयितुमचिरान्मन्त्रिभिः संमतोऽभूत् ॥ ६० ॥

बद्धः । एतेन सादृश्यं जातं परंतु त्वत्सुतेन रावणहननात्त्वातिशय इति भावः ॥ ५५ ॥ ५६ ॥

हे पुरन्दरनन्दन चेत् यदि त्वं मां आहनिष्यसि तदा मम शुद्धिः मनःप्रसत्तिर्भविष्यति । अस्मात्त्वद्धननापराधात् पुनर्जनकजाविरहो मास्तु । शयानं अन्तर्निष्ठत्वान्मीलिताक्षम् ॥ ५७ ॥

॥ ५८ ॥ ५९ ॥

आदौ राज्ये किष्किन्धाद्रौ सुग्रीवं वानरराज्ये । शङ्कां समुद्रं

रामात्परः शूरतरो न कश्चित्पराभवः स्त्रीह-
रणान्न चान्यः । तथापि नाब्धिं प्रविवेश रा-
मो बबन्ध सेतुं विजयासहिष्णुः ॥ ६१ ॥

अपि च—

रामाद्बलीयान्न परोऽत्र कश्चिद्दारापहारान्न
परोऽभिमानः । तथापि रामः शरदं प्रतीक्ष्य
बद्ध्वाम्बुधौ सेतुमरिं जगाम ॥ ६२ ॥

रामस्तत्र जनकतनयाकमनीयतामनुस्मृत्य—

इन्दुर्लिप्त इवाञ्जनेन गलिता दृष्टिर्मृगीणामिव
प्रम्लानारुणमेव विद्रुमदलं श्यामेव हेमप्रभा ।
पारुष्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतस्तु हन्त शिखिनां बर्हाः सगर्हा इव ६३

रामः कादम्बिनीताण्डवाडम्बरं विलोक्य—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।

तीर्त्वा कथं स्यामिति भयं त्यक्त्वा लङ्कां प्रतस्थे । तदनु प्रस्थान-घोषान्तरं मन्त्रिभिः कपिभटैर्वर्षाकालं गमयितुं संमतः अभूत् । वर्षाकालं गमयित्वा यास्याम इति निश्चितवान् । एतेन नीतिशास्त्रप-राणां प्राधान्यं दर्शितम् ॥ ६० ॥ ६१ ॥ ६२ ॥

प्रकर्षेण म्लानः अरुणः शोणिमा यस्मिंस्तं कलयापि सीतास्व-रलेशेनापि । अत्र सर्वमङ्गसादृश्यम् । एतेन गुणकीर्तनावस्थोक्ता । सोक्ता रसोदधौ—'वैरहकान्ताविषयकप्रशंसनं स्यात् गुणाख्यानम्' इति ॥ ६३ ॥

यदिन्दीवरं त्वन्नेत्रसमानकान्ति तदपि सलिले मग्नम् । यः तव मुखच्छायानुकारी सोऽपि शशी मेघैरन्तरितः । राजहंसा अपि

येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ६४

इति श्रीहनुमन्नाटके वालिवधो नामपञ्चमोऽङ्कः ॥ ५ ॥

---

## षष्ठोऽङ्कः ।

रामः वानरभटानाचष्टे । भो भो सुग्रीवसै-
निकाः शृणुत—

व्यसने महति प्राप्ते स्थिरैः स्थातुं न युज्यते ।
लङ्कां निःशङ्कमालोक्य क इहागन्तुमर्हति ॥ १ ॥

हनुमान् सहर्षं दोस्तम्भास्फालनकेलिम-
भिनीय निजप्रचण्डदोर्दण्डयोर्महतीं प्रौढिं
नाटयति । देव पश्य—

अष्टांगुलमयः कायः पुच्छो मे द्वादशांगुलः ।
बाहू मे पश्य भो नाथ कथं रत्नाकरं तरे ॥ २ ॥

रामचन्द्रः सविस्मयो बभूव ।

ततो जाम्बवान्—देव रुद्रावतारोऽयं मारुतिः ।
रुद्रस्तुतिः क्रियताम् । रामचन्द्रो रुद्रस्तुतिं
कृत्वा भो भो मारुते, त्वया विहीनः कः कर्तुं

गताः, वर्षाकाले कमलाभावात् । अन्यत्सुगमम् । प्रलापावस्थेयम् ।
सोक्ता रसोदधौ—' कान्ताश्रितकालात्ययव्यवहारः स्यात् । प्रला-
पोयम्' इति ॥ ६४ ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकटीकायां
वालिवधो नाम पञ्चमोऽङ्कः ॥ ५ ॥

---

स्थिरैर्योगिभिरपि किमुत गृहिभिः । भवतां मध्ये कः आगन्तु-
मर्हतीति ॥ १ ॥ २ ॥

हे स्वामिन्प्रभो, अयं व्योमतरुराकाशमेव वृक्षा मम क्रमत-

समर्थोऽस्ति ? तत्र हनूमान्महावीराद्भुतपरा-
क्रमः । सहर्षं वाक्यम् । देवाकर्णय—

कूर्मो मूलवदालवालवदपां नाथो लतावद्दिशो
मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः ।
स्वामिन्व्योमतरुर्मम क्रमतले श्रुत्वेति गां मारुतेः
सीतान्वेषणमादिशन्दिशतु वो रामः सहर्षः श्रियम् ३

देवाज्ञापय किं करोमि सहसा लङ्कामिहैवानये
जम्बूद्वीपमितो नये किमथवा वारांनिधिं शोषये ।
हेलोत्पाटितविन्ध्यमन्दरगिरिः स्वर्णात्रिनेत्राचल-
क्षेपक्षुण्णविवर्तमानसलिलं बध्नामि वारांनिधिम् ४॥

अपि च—

देवाज्ञां देहि राज्ञां त्वमसि कुलगुरुः शोषये
किं पयोधिं किंवाऽलङ्कां सलङ्काधिपतिमुपनये
जानकीं मानकीर्णाम् । सेतुं बध्नामि मत्तः

लेऽस्ति पादविन्यासोत्थापनान्नीचैरस्ति । तमेव वृक्षरूपत्वेन निरूप-
यति । कूर्मो मूलवदिति ॥ ३ ॥

मूलस्थानीयं जम्बुद्वीपं सागरान्तर्वर्तिदेशम् । इतः सकाशात्
तत्रैव लङ्कासमीप एव आनये प्रापयामि । लङ्कापि जम्बुद्वीपान्तराल
एवेत्युक्तार्थे वैपदम् । एवं व्याक्रियते जम्बुयुक्तो द्वीपः । मध्यमपद-
लोपी समासः । द्वीपशब्देन लक्षणा ' शेषो जम्बूध्वजो द्वीपो परो
व्ययखराडिति ' तन्त्रे जम्बूद्वीपलक्षणं शेषत्वात्स्वर्णाचलो मेरुः ।
त्रिनेत्राचलः कैलासः विन्ध्यादीनां क्षेपेण प्रक्षेपणेन क्षुण्णं खण्डितं
विवर्तमानं प्रत्यागतं अवरुन्धमानं सलिलं यस्य तं बध्नामि पर्वतैरेव
स्थलीकरोमि ॥ ४ ॥

इत्युक्तेऽपि किं कारयामि इति विचिकित्समानः पुनरात्मब-
लमुक्तार्थानुवादेनैव स्मारयति—देवाज्ञामिति द्वाभ्याम् । अलङ्कां

स्फुटितगिरितटीभूतभङ्गात्तरङ्गादुद्भ्राम्यन्नक्र-
चक्रोऽपि च मकरकुलग्राहचीत्कारघोरम् ॥ ५ ॥
किं प्राकारविहारतोरणवतीं लङ्कामिहैवानये
किंवा सैन्यसमुद्धृतं च सकलं तत्रैव संप्रापये ।
हेलान्दोलितपर्वतोच्चशिखरैर्बध्नामि वारांनिधिं
देवाज्ञापय किं करोमि सकलं दोर्दण्डसाध्यं मम॥६॥

रामः सत्वरं करमुद्रां समुद्धृत्य, वीर मारुते—
मुद्रां समुद्रमुल्लङ्घ्य शीघ्रमाश्वास्य जानकीम् ।
विन्यस्य पुरतस्तस्या आगच्छ मयि जीवति ॥ ७ ॥
हनूमांस्तथेति श्रीरामसुग्रीवौ प्रणम्य समा-
दाय मुद्रां समुद्रोपकण्ठं पीठावतारमासाद्य
सद्योऽचिन्तयत्—

एते ते दुरतिक्रमाः क्रममिलद्घूर्णोर्मिमर्मच्छिदः

लङ्केव नास्तीत्येवं चूर्णीकरोमीति शेषः । अथवा मानकीर्णां पाति-व्रत्योन्नतिमतीं जानकीमुपनये । सेतुं बध्नामि । किंभूतं सेतुम् । मत्तः सकाशात्स्फुटिता ये गिरयस्तेषां तटीभिर्भूतानां भङ्गो यत्र तस्मात्तरङ्गादुच्चैर्भ्रमन्तो ये नक्रास्तेषां चक्राणां समूहानां क्रमादुत्फाला मकरग्रहग्राहचीत्कारैश्च घोरं 'नक्राः सपक्षजातीया मकराः स्युश्चतुष्पदाः । एतद्भिला ग्रहा ग्राहास्तद्भिलाः समुदीरिताः' इति वैद्यके । यद्वा किंविशिष्टात् मत्तः । स्फुटिता ये गिरयस्तेषां तटीभिर्ये भूतभङ्गाः प्राणिनाशास्तैरात्तः स्वीकृतो रङ्गो येन तस्मात् ॥ ५ ॥

सैन्येन सह समुद्धृतं तत्रैव लङ्कायां सैन्येन सह सम्यगुद्धृतं सर्वं संपादये व्यापादये । हन्मि सकलं पर्वतादिकम् । सुगमम् ॥ ६॥

रामः शीघ्रं रावणं हत्वा नेष्यतीति वचसाश्वास्य तस्याः पुरतो मुद्रां विन्यस्य मयि जीवतीति ॥ ७ ॥

एते झञ्झानिलाः झञ्झानामानो वायवः कदम्बसंबन्धिना रजो

कादम्बेन रजोभरेण ककुभो रुन्धन्ति झञ्झानिलाः।
गाढाम्रेडनरूढनीरदघटासंघट्टनीलीभव-
द्व्योमास्फोटकटाहनिर्झरपयोवेणीकणग्राहिणः ॥८॥

धैर्यमवलम्ब्योद्यल्लाङ्गुलास्फालकेलिव्याकु-
लीकृताम्बरचरः सज्जो बभूव ।

अथ सविलसदम्भःस्तम्भिताक्षिप्रकाशं
जलचरखललेखास्फालवाचालिताशम् ।
जलनिधिमधिवीरोल्लङ्घितुं जाङ्घिकत्वं
खगपतिरिव चण्डोड्डीनमङ्गीचकार ॥ ९ ॥

लांगूलोत्तालकेतुर्नभसि पृथुगतिः स्फारसी-
मन्तिताभ्रः स्फूर्जत्प्रौढोरुवेगोल्लालितजलनि-

भरेण ककुभो रुन्धन्त्याच्छादयन्ति । किंभूताः । दुरतिक्रमाः दुर्ल-ङ्घ्याश्च ते क्रमेणैव मिलन्त एकीभवन्तश्च ते घूर्णोर्मयश्च घूर्णाय-माणतरङ्गास्तैरेव लोकानां मर्माणि छिन्दन्ति इति । पुनः कीदृशाः । गाढाम्रेडने वातातिशयमेलनेन रूढा प्रवृद्धा या नीरदघटा तस्याः संघट्टेन संयोगेन नीलीभवत् श्यामीभूतं यद्व्योम तस्मिन्स्फोटनं तद्युक्तश्चासौ कटाहश्च कटाहो ब्रह्माण्डकटाहस्तस्माद्यान्निर्झरत्पयः गङ्गा तस्य या वेणी प्रवाहस्तस्मादम्बुकणान् ग्रहीतुं शीलं येषां ते ‘ आम्रेडनोक्तियोगीऽस्त्री ’ इति विश्वः ॥ ८ ॥

उद्यल्लांगूलेति । अथ दुरतिक्रमणविचारानन्तरं स हनूमाञ्ज-लनिधिं लङ्घयितुं जाङ्घिकत्वमङ्गीचकारेत्यन्वयः । ‘ जङ्घालोति-जवो जङ्घाकारिको जाङ्घिको जवी’ इति चरकः । कः किमिव । खग-पतिर्गरुडः चण्डोड्डीनमिव । कीदृशं जलनिधिम् । विलसिताम्भ-स्तम्भितः नेत्रप्रकाशो येन तं जलचराणां मत्स्यादीनां खराः तीक्ष्णा निरन्तरा या लेखा क्रीडनं तत्र ते आस्फाला उत्पातास्तैर्वाचा-लिता मुखरीकृता आशा दिशो येन तम् ॥ ९ ॥

हनुमानिति शेषः । सिन्दूरपूरारुणं दिग्वारणानां कटितटम-

धिः पृष्ठकृष्टोग्रसत्त्वः । दूरात्सिन्दूरपूरारु-
णमरुणरुचिस्तेजसः संविभागैश्चक्रे दिग्वा-
रणानां कटितटमभितः सूर्यविद्धाम्बुदाभम् ॥ १० ॥

तत्रावसरे समुद्रादुत्थितो मैनाकः—

विश्रान्तस्तत्र हर्षात्सपदि जलधिना प्रेरितो
रत्ननाभो मैनाकः काञ्चनाङ्गस्तुहिनगिरिसुतः
प्राह दूरागतस्त्वम् । हंहो दूराध्वखेदं जहि
मम शिखरे प्राप्य तस्येति वाचं स्पृष्ट्वाऽङ्गुल्या
तदग्रं भुजरयपवनापूरिताशं जगाम ॥ ११ ॥

भितः सर्वतस्तेजसः संविभागैः स्वाङ्गदीप्तिसंचारणैः सूर्यविद्धाम्बु-दाभं सूर्येण विद्धस्यालिङ्गितस्याम्बुदस्येवाभा यस्य तादृशं चक्रे । यथा लग्नरविकरा मेघा दृश्यन्ते तथा दूरादेव लग्नाङ्गदीप्तयः दिग्वारणा अभवन्नित्यर्थः । सूर्यसादृश्ये हेतुमाह—अरुणरुचिः वानरजातित्वात् । यद्वा समुद्रोल्लङ्घनाविष्कृतरोषावेशाच्च अरुणा रुचिर्यस्य । रोषमेव द्योतयति— लाङ्गुलमेवोत्तालः केतुर्यस्य नभसि या पृथुगतिः शीघ्रगमनं तदर्थं यः स्फार उत्पतनं तेन सीम-न्तितानि द्विधाभूतानि अभ्राणि येन 'अभ्रं मेघो वारिवाहस्त-नयित्नुर्बलाहकः ' इत्यमरः । स्फूर्जत् निर्गच्छत् यः प्रौढोऽति-बहु ऊरुवेगः जङ्घाजवस्तेन उच्छलितः जलनिधिर्येन सः । पृष्ठेनाकृ-ष्टानि उग्राणि राक्षसादीनि सत्त्वानि येन सः । समुद्रलङ्घने राक्ष-सयुद्धं प्रसिद्धम् ॥ १० ॥

मैनाको गिरिः कपिं प्राह—हंहो सम्बोधनेऽव्ययम् । हे हनु-मन् त्वं दूरादागतः अतो मम शिखरे दूराध्वखेदं जहीत्यन्वयः । तस्य गिरेरिति वाचं प्राप्य श्रुत्वा अङ्गुल्या चरणाङ्गुल्या तदग्रं तच्छिखराग्रं स्पृष्ट्वा भुजरयपवनेनापूरिता आशा येनैवं यथा स्या-त्तथा जगाम । कीदृशो मैनाकः । जलनिधिना सपदि हर्षान्म-त्कर्तृसगरगोत्रापत्यरामसहायकृदयमिति प्रीत्या प्रेरितः । ननु कुतस्तत्र गिरिरित्यपेक्षायामाह— कीदृशो गिरिः ।, विश्रान्त

वेलातटे शालतमालमालां विलोक्यमानः
सहसाञ्जनेयः । उल्लोलयन्वालधिवल्लिमुच्चैः
कल्लोलिनीवल्लभमुल्ललङ्घे ॥ १२ ॥

अथ दशरथसूनोराज्ञया वायुपुत्रो
रजनिचरपुरीमालोक्य भूत्वा द्विदंशः ।
अकलितपरिमाणो मात्रया सत्रपस्तां
क्षिपति जनकजाग्रे शिंशपाग्रावतीर्णः ॥ १३ ॥

जानकीं नमस्कृत्य मारुतिः—

मातर्जानकि को भवानिह मृगः केनात्र संप्रेषित-
स्त्वद्दौत्येन रघूत्तमेन किमिदं हस्तेऽस्ति तन्मुद्रिका।
दत्ता तेन तवैव तां निजकरादालभ्य चालिङ्ग्य च
प्रेम्णाश्रूणि ससर्ज सम्यगुदभूद्गात्रेषु रोमोद्गमः॥१४॥

पक्षच्छिदो गोत्रभिदः भयान्निलीय स्थितः । अन्यत्सुगमम् ॥ ११ ॥

आञ्जनेयोऽञ्जनीपुत्रः हनूमान्सहसाऽनायासेन कल्लोलिनीवल्लभं समुद्रमुल्ललंघे लङ्घितवान् । वालधिः पुच्छं तदेव वल्ली तामुल्लोलयन्नुच्चैश्चालयन् ॥ १२ ॥

अल्पो भूत्वा लङ्कां प्रविशेति रामाज्ञया द्विदंशप्रमाणदेहः 'द्विदंशो वनमक्षिका' इति विश्वः । मात्रया परिमितदेहेन शिंशपाग्रादशोकाग्रादवतीर्णः 'समौ स्तः शिंशुपाशोकौ' इति निघण्टः ॥ १३ ॥

मुद्रादानप्रकारमाह—अत्राप्युक्तिप्रत्युक्तिः । हनूमान्—मातः जानकि । सीता—भवान् कः ? हनू०—मृगः वानरः । सीता—अत्र केन संप्रेषितोसि ? हनू०—रघूत्तमेन त्वद्दौत्येन त्वद्दौत्यनिमित्तम् । सीता—इदं हस्ते किम् ? हनूमान्—तन्मुद्रिका सीते तेन तुभ्यं दत्ता तवैव दत्तेति परस्परमुक्त्वा सीता तां मुद्रिकां निजकरादालभ्य गृहीत्वा आलिङ्ग्य स्वहृदये विन्यस्य प्रेम्णाऽश्रूणि ससर्ज । सम्यक् स्पष्टं यथा स्यात्तथा गात्रेषु रोमोद्गमोऽभूदिति ॥ १४ ॥

हनुमानविरलगलदश्रुपूर्णलोचनाभ्यां सौवर्णम-ङ्गुलीयकं मन्यमानां जानकीं संभावयामास ।

हे भामिनि !

सुवर्णस्य सुवर्णस्य सुवर्णस्य च मैथिलि ।
प्रेषितं रामचन्द्रेण सुवर्णस्याङ्गुलीयकम् ॥ १५ ॥

जानकी आशालेशमासाद्य क्षणमश्रूणि प्रमृज्य—

मुद्रे सन्ति सलक्ष्मणाः कुशलिनः श्रीरामपादाः सुखं सन्ति स्वामिनि मा विधेहि विधुरं चेतोऽनया चिन्तया । एनां व्याहर मैथिलाधिपसुते नामान्तरेणाधुना रामस्त्वद्विरहेण कङ्कणपदं ह्यस्यै चिरं दत्तवान् ॥ १६ ॥

अत्राङ्गुलीयकमणौ प्रतिबिम्बमासी-
द्रामस्य सादरमतीव विलोकयन्ती ।
मद्रूप एव किमभून्मम वीक्षयेति
मीमांसया जनकराजसुता मुमोह ॥ १७ ॥

हे भामिनि भ्रमवति, 'भामोऽस्ति भ्रमकोपयोः' इति चरकः । इदं सुवर्णस्य हेम्नः अङ्गुलीयकं रामेण तव तुभ्यं प्रेरितं प्रस्थापितम् । किंभूतस्य सुवर्णस्य शोभनपीतरक्तरङ्गवतः । पुनः किंभूतस्य सुवर्णस्य शोभनरामनामाक्षरवतः । पुनः सुवर्णस्य दशमाषमात्रस्य 'सुवर्णं दशमाषकम्' इति ॥ १९ ॥

मुद्रेति । परपुरुषसंभाषणात्पातिव्रत्यभङ्गभयान्मुद्रिकामुपन्यस्य पृच्छति—मुद्रेति । रामः अस्यै मुद्रायै चिरं त्वद्विरहेण कङ्कणपदं कङ्कणस्थानं दत्तवान् । एतेन व्याधिर्दर्शितः । उक्तं च रसोदधौ—'व्याधिः स्मरवेदनया समुत्थसंतापदोषकृतः । कृशिमा' इति । सुगमम् ॥ १६ ॥

अत्र अङ्गुलीयकमणौ सादरं यथा स्यात्तथा अतीव । रामस्येति

कथंचिच्चेतनां प्राप्य—

अये मरुत्तनय यदङ्गुलीयकमेव कङ्कणमभत्स्वा-
मिनो रामदेवस्य तर्हि किमिव तनुतां गतः ?

हनुमान्—

स्वभावादेव तन्वङ्गि त्वद्वियोगाद्विशेषतः ।
प्रतिपत्पाठशीलस्य विद्येव तनुतां गतः ॥ १८ ॥

जानकी—

चन्द्रो यत्र दिनेशदीधितिसमः पद्मं स्फुलिङ्गोपमं
कर्पूरः कुलिशोपमः शशिकला शम्पासमा भासते।
वायुर्वाडववह्निवन्मलयजो दावाग्निवत्सांप्रतं
संदेशं नय रामसंनिधिमितो यात्रां द्रुतं कारय ॥१९॥

हनुमान्—

किं दूरमिन्दुमुखि रामशिलीमुखानां
किं दुर्गमर्गलभिदां हरियूथपानाम् ।

कर्मणि षष्ठी । रामं रामनामाक्षरं विलोकयन्ती सीता प्रतिबिम्बं आसीत् । मणौ प्रतिबिम्बिता बभूवेत्यर्थः । यद्वा अत्र भ्रमः । अत्र मणौ रामस्य प्रतिबिम्बमासीत्तदस्ति नवेति परीक्षया विलोकयन्ती स्वप्रतिबिम्बं तत्र सा दृष्ट्वा विचिकित्सति—मद्रूप इति । रामोपि मच्चिन्तया मद्रूप एवाभूत् किमिति मीमांसया विचारेण मुमोह वैचित्यमाप ॥ १७ ॥

हे तन्वङ्गि, स्वभावादेव तनुतां गतः त्वद्वियोगाद्विशेषत इत्यन्वयः । 'तन्वङ्गी' इति वा पाठः । तनून्यङ्गानि यस्यासौ रामः स्वभावादेव त्वद्वियोगाद्विशेषतस्तनुतां गत इति योज्यम् । तन्वङ्गी इन्नन्तः ॥ १८ ॥

चन्द्रेति । शम्पा विद्युत् । कारयेति स्वार्थे णिच् । कुर्वित्यर्थः । तत्र गत्वा यात्रां रामप्रस्थानं कारयेत्यर्थः ॥ १९ ॥

ननु समुद्रान्तरितरक्षोगृहमागताऽहं दूरस्थो राम इति मी-

दैवं प्रसन्नमिव देवि तवाद्य सत्यं
रक्षांसि कानि कुपितस्य सलक्ष्मणस्य ॥ २० ॥

अत्रान्तरे जानकीं सप्रपञ्चं पृच्छन्हनुमान्—
मातः ! कुत्रास्ते राजवाटिका ?

दर्शयति जानकी—
रे पुत्र ! पश्चिमदिग्भागेनास्यास्ति वाटिका
हनुमान् उच्चल्लाङ्गूलप्रचण्डरूपेण प्रचलितः—
इत्युक्त्वा रजनीचरस्य हनुमानुद्भिद्य लीलावनं
वीरं तत्सुतमक्षमात्तपरिघाघातैर्जघानागतम् ।
तत्कोपारुणलोचनेन्द्रजयिना प्राङ्निष्फलत्वाद्धृतं
ब्रह्मास्त्रेण विगर्हितेन विधिना बद्धो विदग्धः कपिः२१

रावणः ( तमालोक्य )—
रे रे वानर को भवानहमरे त्वत्सूनुहन्ताऽऽहवे
दूतोऽहं खरखण्डनस्य जगतां कोदण्डदीक्षागुरोः ।

मांसमानां संबोधयति—अर्गलानि प्राकारादीनि भिन्दतीत्यर्गलाभि-दस्तेषाम् । शेषं सुगमम् ॥ २० ॥

उद्भिद्योत्पाट्य तत्सुतं रावणपुत्रमक्षनामानं वनभङ्गं श्रुत्वा योद्धु-मागतम् । तस्मिन्हनुमति यः कोपस्तेनारुणे लोचने यस्य तेनेन्द्रज-यिना मेघनादेन कृत्वा प्राङ्निष्फलत्वाद्विगर्हितेन विधिना ब्रह्मणा हेतुभूतेन ब्रह्मणा ब्रह्मास्त्रेण ब्रह्मदत्तपाशेन बद्धः । अत्रेयं कथा— पूर्वं ब्रह्मणा दत्तो ब्रह्मपाशः एतेन त्वं कपिं बध्नीहीति रुद्रावतारे हनूमति पाशो निष्फलो जातः । ततो मेघनादेन ब्रह्मणो गर्हा कृता ततश्च ब्रह्मणा प्रार्थितो हनूमान् स्वयं निबद्धः । विदग्धः ब्रह्मसंकटा-त्महननिवारणविधिज्ञः ॥ २१ ॥

रेरे वानर ! भवान् कः ? हे रावण, अहमाहवे त्वत्सूनुहन्ता अक्षघाती । अनेन स्वतो बलमुपदिश्य स्वामिनोप्यात्मनो बलं द्योत-

महोद्दण्डकठोरताडनविधौ को वा त्रिकूटाचलः
को मेरुः क्व च रावणस्य गणना कोटिस्तु कीटायते२२
ईषत्सज्जनमैत्रीव नाभिद्यत कपेस्तनुः ।
निहता चन्द्रहासेन रावणेनातिरंहसा ॥ २३ ॥
लाङ्गूले चैलतैलप्लुतबहलशणैर्वेष्टिते दीप्यमानो
रक्षोभिर्वीक्षितोऽग्निर्द्विजपरुषगिरा राघवो यद्य-
तुष्टः । तुष्टो यद्याज्यहोमैस्त्वमपि रघुपतेर्यद्यहं
भक्तियुक्ता संतप्तः प्रार्थितो मा तदिह हनुमतः
सीतया शीतलोऽभूत् ॥ २४ ॥
वह्निर्बभौ वानरपुच्छजन्मा स दाह्य लङ्कां
खमिवोत्पतिष्णुः । रामाद्भयं प्राप्य किल
प्रतापः पलायमानो दशकंधरस्य ॥ २५ ॥

यति—खरखण्डनस्येत्युपलक्षणम् । खरदूषणत्रिशिरसां त्वद्भ्रातॄणां खण्डनस्य हन्तुः रामस्य दूतः । किं भूतस्य रामस्य । जगतो विश्वस्य या कोदण्डदीक्षा धनुर्विद्याशिक्षणं तस्य गुरोः शिक्षकस्य । महो-द्दण्डाभ्यां यत्कठोरताडनं तस्य विधौ सति मयि प्रहरति सति त्रिकू-टादयः के । न केऽपीत्यर्थः ॥ २२ ॥

ईषदपि नोऽभिद्यत् । चन्द्रहासाख्यखड्गेन तत्राप्यतिरंहसा अ-तिबलेन ॥ २३ ॥

खड्गे निष्फले आत्मनः पूर्वोक्तवैदग्ध्यमाविष्कर्तुं मां दहेति शि-क्षितो रावणः दाहयति—सीतया इति प्रार्थितोऽग्निर्हनुमतः शीतलोऽ-भूत् न परेषामिति । इति किम् । भो अग्ने, यदि संतुष्ट इत्यादि सुगमम् । हनुमतः संतप्तो मा भवेति शेषः । तत् तदा यदि तुष्टोसि । कीदृशोऽग्निः । चैलादीप्यति लांगूले सति दीपितः । सुगमम् ॥ २४ ॥

वह्निर्लङ्कां विदह्य बभौ । कीदृशः । खमुत्पतिष्णुः उच्चैर्गन्तुकः । क इव । खं प्रति पलायमानदशकंधरप्रताप इव ॥ २५ ॥

पलानि भुक्त्वा चपलः पलाशिना
हुताशनस्तृप्तिमुपागतः पराम् ।
विराजते स्म प्रतियातनाच्छला-
ज्जलानि चाब्धौ तृषितः पिबन्निव ॥ २६ ॥

रावणः (स्वगतम्)—

यद्ययं रुद्रो मारुतिस्तर्हि किमिति रुद्रभक्तस्य मे नगरीं दहति । अहह ज्ञातम् ।

तुष्टः पिनाकी दशभिः शिरोभिस्तुष्टो न
चैकादशमो हि रुद्रः । अतो हनूमान्दहतीति
कोपात्पङ्क्तेर्हि भेदो न पुनः शिवाय ॥ २७ ॥

अपि च—

अब्धिः किं वडवानलेन तरणेर्बिम्बेन किं चाम्बरं
मेघः किं चपलाचयेन शशिभृत्किं भालनेत्रेण वा ।
कालः किं क्षयवह्निनेन्द्रधनुषा धाराधरः किं महान्
मेरुः किं ध्रुवमण्डलेन स कपिः पुच्छेन खे राजते २८

अथ राक्षसाः—

मरुत्पुत्रस्त्वेकः कपिकटकरक्षामणिरसौ

पलाशिनां रक्षसाम् । पलानि मांसानि । चपलः शीघ्रदाहकः प्रतियातना प्रतिबिम्बस्तन्मिषेण ॥ २६ ॥

हि यतः पङ्क्तेर्भेदः भेदनं शिवाय मङ्गलाय न भवति । सुगमम् ॥ २७ ॥

सः प्रसिद्धः कपिः पुच्छेन खे राजते । तत्र कविरुत्प्रेक्षते केन क इव । सर्वं सुगमम् । पुनर्मेघग्रहणं धनुरुत्प्रेक्षार्थम् । अलंकारदूषितमिदं पद्यम् । तदुक्तं दण्डिना—'असंबद्धोपमं पद्यं न कुर्वीत विदूषितम्' इति ॥ २८ ॥

लङ्कापुरवासिनो राक्षसाः । नीचैर्मन्दमन्दमिति प्रोचुः । इतीति

समुद्यल्लाङ्गूलो ध्वज इव समाश्लिष्टगगनः ।
पुनः प्रत्यायास्यत्यहह कपिसैन्ये प्रचलिते
पदं प्रोचुर्नीचैर्भयचकितलङ्कापुरजनाः ॥ २९ ॥

अथाह गगनमण्डलस्थो मारुतिः—

एकोऽहं पवनात्मजो दशमुख त्वं चापि कोटीश्वर-
स्त्वां जित्वा समरे प्रभोः प्रणयिनीं सीतां च नेतुं क्षमः।
किं तूत्थाय भुजं पुरा भगवता रामेण सुग्रीवतो
हत्वा दक्षिणपाणिना वसुमतीं त्वां हन्तुमूक्तं वचः॥ ३०॥

इत्युक्त्वा दशग्रीवनगरीं भस्मसात्कृत्वा रक्षिताम-शोकवनिकामागम्य जानकीं प्रणम्य रामाभिज्ञानं याचते स्म हनुमान् ।

मैथिली—

शिखां धूमशिखां शत्रोः कालव्यालवधूमिव ।
उद्यम्यास्य शिरोरत्नं संज्ञानं स्वामिनं ददौ ॥ ३१ ॥

शेषः । इति किम् । अहहेति कष्टम् । ततः कपिसैन्ये प्रचलति सति मरुत्पुत्रो हनूमान् पुनः पदमस्मदीयं स्थानं लङ्कां प्रत्यायास्यति आगमिष्यति । यद्वा पदं वचनम् । कीदृशः । एक एवासौ कपिक-टकरक्षामणिः । यद्वा एकोऽसहायः असौ मरुत्पुत्रः पुनरायास्य-तीति योज्यम् । पुनः समुद्यल्लांगूल ऊर्ध्वगतपुच्छः । क इव पुच्छः । समाश्लिष्टगगनः ध्वज इव ॥ २९ ॥

पूर्वार्धं सुगमम् । शक्तश्चेत्कथं मां न हन्याः सीतां च न नयसी-त्यत्राह—पुरा रामेण सुग्रीवतः सुग्रीवाग्रे सुग्रीवं प्रति वा । सार्ववि-भक्तिकस्तसिल् । त्वां हन्तुं वचनमुक्तं यत्तद्वचोऽनृतं स्यादतो न हन्मीति भावः । अन्यत्स्पष्टम् ॥ ३० ॥

रक्षितामग्निनाऽदग्धाम् ।

शिखां वेणीमुद्यम्य । कीदृशीम् । धूमशिखां धूमस्येव शिखा

